# मुण्डकोपनिषत्



## श्रीमच्छङ्कराचार्यकृतभाष्यसमेता

वेदान्तवागीश
पंडित श्रीधरशास्त्री पाठक

संस्कृताध्यापक डेक्कन कॉलेज

इत्येतैः

स्वनिर्मितया बालबोधिन्या समलंकृता
विस्तृतोपाद्घातेन च संयोजिता

पुण्यपत्तनम्

१९२५

मूल्यम् 15/-

# अनुक्रमणिका



# अथ प्रास्ताविकं किंचित् ।

## १ वेदवेदान्तयोः संबन्धः ।

विदितमेवेदं विचारशीलानां यद्दुःखजिहासासुखपरीप्सानिमित्तं प्राणभृतां प्रवृत्तिस्तत्र प्रायो बहव ऐहिकसुखार्थमेव यतन्ते न पारलौकिकाभ्युदयश्रेयोनिमित्तम् । केचित्तु लौकिकसुखस्यानित्यतां निरूप्य पारलौकिकाभ्युदयार्थं प्रयस्यन्ति । परन्तु नाधिगच्छन्ति तदुपायम् । तन्निमित्तं परमेश्वरनिःश्वासभूतो वेदो यज्ञादिसाधनान्युपदिदेश । ततः स्वर्गादिपारलौकिकसुखमपि "यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिवचसा क्षयीति ज्ञात्वा केचन परमश्रेयःसाधनभूतं ब्रह्म जिज्ञासवो बभूवुस्तदर्थं वेदेनैव कासुचिदीशावास्याद्युपनिषत्सु मन्त्रान्तर्गतासु ब्रह्मोपदिष्टम् । परं मन्त्रभागस्याख्यायिकादिरहितत्वेन दुर्विज्ञेयत्वान्मन्त्राणां व्याख्यातृभिर्ब्राह्मणप्रणेतृभिस्तैस्तैर्महर्षिभिः कर्मकाण्डप्रतिपादनानन्तरमुपासनाघटितास्तास्ता उपनिषदः समाम्नाताः । एवं चैतत्सिद्धं यन्मन्त्रात्मको योऽपौरुषेयो वेदभागस्तत्र विस्तरशो यज्ञादि कर्म प्राणायि यदर्थं सकलापि पूर्वमीमांसोपयुज्यते यां चासूत्रयद्भगवाञ्जैमिनिः 'अथातो धर्मजिज्ञासा' जै. सू. १ । १ । १ इत्यादिना । ततः परं संक्षेपतो वेदान्तविद्याप्रतिपादिन्य ईशाद्युपनिषदो मन्त्रभाग एवोक्ताः । अथच ब्राह्मणं—तैस्तैर्महर्षिभिः प्रणीतम् । तत्र पूर्वं कर्मकाण्डं व्याख्यातम् । ततः सुखबोधार्थमुपासनादिसाधनप्रतिपादनपुरःसरमाख्यायिकादृष्टान्तादिघटिता ब्राह्मणोपनिषदः पठिताः । यासांच मन्त्रब्राह्मणोपनिषदामसन्दिग्धार्थप्रतिपत्तये भगवान् बादरायणः "अथातो ब्रह्मजिज्ञासा" ब्र. सू. १ । १ । १ इत्यादीनि सूत्राणि प्रणिनाय । अतएवोक्तं भगवत्पूज्यपादैः श्रीशंकराचार्यैः "वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम्" ब्र. सू. शां. भा. १ । १ । २ इति ।

## २ उपनिषदः ।

उपनिषच्छब्दस्य तत्र तत्र श्रीमच्छंकराचार्यैरर्थः प्रदर्शितः । तथाहि कठोपनिषदि प्रस्तावनाभाष्ये—१।१।१ सदेर्धातोर्विशरणगत्यवसादनार्थस्यो-

पनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति । उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते । केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इत्युच्यते । ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते । तथाच वक्ष्यति "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इति । पूर्वोक्तविशेषणान्मुमुक्षून्वा परं ब्रह्म गमयतीति ब्रह्मगमयितृत्वेन योगाद्ब्रह्मविद्योपनिषत् । तथाच वक्ष्यति— ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरिति । लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्याप्युपनिषदित्युच्यते—तथाच वक्ष्यति— स्वर्गलोका अमृतत्वं भजन्त इत्यादि । ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति । उपनिषदमधीमहे । अध्यापयाम इति च । एवं नैष दोषः । अविद्यादिसंसारहेतुविशरणादेः सदिधात्वर्थस्य ग्रन्थमात्रेऽसंभवाद्विद्यायां च संभवाद्ग्रन्थस्यापि तादर्थ्येन तच्छब्दत्वोपपत्तेः । आयुर्वै घृतमित्यादिवत् । तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छब्दो वर्तते ग्रन्थे तु भक्त्येति । मुण्डकोपनिषद्—१।१।१ प्रस्तावनायां—य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयति—अविद्यादिसंसारकारणं चात्यन्तमवसादयति विनाशयतीत्युपनिषत् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात् । इति । अत्र केनोपनिषदि ४।३२ 'उपनिषदमब्रूम' उपनिषदं—परमात्मविद्यामित्यर्थः कृतः । तैत्तिरीयोपनिषत् (२।९) भाष्ये "परं श्रेयोऽस्यां निषण्णमिति । तथा छान्दोग्योपनिषद्यष्टमाध्यायेऽष्टमखण्डे चतुर्थकण्डिकायां—उपनिषच्छब्देन ज्ञानमुच्यते—एतदुपनिषदो भविष्यन्ति देवा वासुरा वा ।८।८।४ इति । एतदुपनिषदः—एतज्ज्ञानाः । तथा बृहदारण्यकोपनिषत्प्रस्तावनायाम्— "सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात् । उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते" । एवं चैतात्सिद्धं संसारबीजविनाशिनी या विद्या सोपनिषच्छब्देन मुख्यया

वृत्त्या बोध्यते । तादृशविद्याप्रतिपादकत्वाल्लक्षणयेशावास्यादयो ग्रन्था अप्युपनिषच्छब्देन व्यवह्रियन्ते । ता उपनिषदश्चतुर्षु वेदेष्वष्टोत्तरशतसंख्याकास्तत्र द्वात्रिंशन्मुख्याः । तत्रापि दशैवेशादयो मुख्यतरास्तत्रापि माण्डूक्योपनिषन्मुख्यतमा । तथैव मुक्तिकोपनिषद्युक्तत्वात् । 'माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये । तथाप्यसिद्धं चेज्ज्ञानं दशोपनिषदं पठ । तथापि दृढता नो चेद्विज्ञानस्याञ्जनासुत । द्वात्रिंशाख्योपनिषदं समभ्यस्य निवर्तय । विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ ॥ ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा । ता एता अष्टोत्तरशतमुपनिषद ऋग्वेदादौ कियत्यस्तासां शान्तिश्च केति तत्रोच्यते । तथाच—" ऐतरेयकौषीतकिनादबिन्द्वात्मप्रबोधनिर्वाणमुद्गलाक्षमालिकात्रिपुरासौभाग्यबह्वृचानामृग्वेदगतानां दशसंख्याकानामुपनिषदां वाङ्मे मनसीति शान्तिः ॥ ईशावास्यबृहदारण्यकजाबालहंसपरमहंससुबालमान्त्रिकानिरालम्बात्रिशिखिब्राह्मणमण्डलब्राह्मणाद्वयतारकपैङ्गलभिक्षुतुरीयातीताध्यात्मतारसारयाज्ञवल्क्यशाट्यायनिमुक्तिकानां शुक्लयजुर्वेदगतानामेकोनविंशतिसंख्याकानामुपनिषदां पूर्णमद इति शान्तिः ॥ कठवल्लीतैत्तिरीयकब्रह्मकैवल्यश्वेताश्वतरगर्भनारायणामृतबिन्द्वमृतनादकालाग्निरुद्रक्षुरिकासर्वसारशुकरहस्यतेजोबिन्दुध्यानबिन्दुब्रह्मविद्यायोगतत्त्वदक्षिणामूर्तिस्कन्धशारीरकयोगशिखैकाक्षराक्षावधूतकठरुद्रहृदययोगकुण्डलिनीपञ्चब्रह्मप्राणाग्निहोत्रवराहकलिसन्तरणसरस्वतीरहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत्संख्याकानामुपनिषदां सह नाववत्विति शान्तिः ॥ केनछान्दोग्यारुणिमैत्रायणिमैत्रेयीवज्रसूचिकायोगचूडामणिवासुदेवमहत्संन्यासावक्तकुण्डिकासावित्रीरुद्राक्षजाबालदर्शनजाबालीनां सामवेदगतानां षोडशसंख्याकानामुपनिषदामाप्यायन्त्विति शान्तिः ॥ प्रश्नमुण्डकमाण्डूक्याथर्वशिरोऽथर्वशिखाबृहज्जाबालनृसिंहतापनीनारदपरिव्राजकसीताशरभमहानारायणरामरहस्यरामतापनीशाण्डिल्यपरमहंसपरिव्राजकान्नपूर्णासूर्यात्मपाशुपतपरब्रह्मत्रिपुरातपनदेवीभावनाब्रह्मजाबालगणपतिमहावाक्यगोपालतपनकृष्णहयग्रीवदत्तात्रेयगरुडानामथर्ववेदगतानामेकत्रिंशत्संख्याकानामुपनिषदां भद्रं कर्णेभिरिति शान्तिः ॥" मध्वाचार्यकृतव्याससूत्रभाष्ये काषायणादयो बह्वच उपनिषदो निर्दिष्टास्ता मुक्तिकोपनिषदि न दृश्यन्ते । अधुना तनैर्वैदेशीयैरुपनिषदां संख्या २३५

र्वकेमसुच्यते ( Introduction of Upanishads by Max Müller page LXVIII )

## ३ उपनिषदां स्वरूपम् ।

प्रायो मुख्यासु दशसूपनिषत्सु ब्रह्मस्वरूपं, तत्प्रतिपत्तय उपासनाः काश्चित्स्वतन्त्रतया काश्चित्कर्माङ्गत्वेन, सुखबोधार्थमाख्यायिकाश्च तथा काचिज्जगदुत्पत्तिरपि समाम्नायते । कासुचिदुपनिषत्सु पूर्वोक्तानां सर्वेषां वस्तूनां समवायः कासुचित्केवलं ब्रह्मस्वरूपवर्णनं कासुचिदन्यवस्तुसत्त्वेऽप्याख्यायिका नास्ति कुत्रचिदुपासनाघटिताख्यायिकास्ति । एतत्सर्वं छान्दोग्यबृहदारण्यकेशादिषूपनिषत्सु समुपलभ्यते । एतत्तु सत्यं यद्ब्रह्मस्वरूपप्रतिपादनं विनोपनिषन्नास्तीति ।

## ४ शाङ्करमतम् ( अद्वैतमतम् )

अस्मिन्मते ब्रह्मैव सत्यमन्यत्सर्वं मिथ्या । जगदादि सर्वं शुक्तौ रजतमिव भासते । ब्रह्म निर्गुणमतएव शब्दैरप्रतिपाद्यम् । अतएव वाङ्मनसयोरगोचरमिति श्रुतौ कथ्यते । सर्वज्ञत्वादयोऽपि ब्रह्मगुणा औपाधिकाः । जीवो ब्रह्मरूपोऽप्यज्ञानाद्भिन्न इव भाति । मनोबुद्ध्याद्युपाधिभिः सर्वोऽपि जनोऽहमिति प्रत्येति । अतएव सुषुप्तौ मनोबुद्ध्यादिलयेनाहमाकारप्रतीत्यभावः । एवं मोक्षावस्थायामप्युपाधिलयादहमाकारप्रतीत्यभावः । एवं चाहमिति प्रतीतिरौपाधिकी । अयं प्रातीतिका जीव एक एव नतु नाना । अन्तःकरणभेदात्सुखदुःखानुभवभेदः । चैतन्यं सर्वव्यापकं स एवात्मेत्यभिधीयते । अयमात्मेश्वरजीवसाक्षीति भेदेन त्रिविधः । सर्वजगन्मूलकारणमज्ञानं तस्मिंश्चैतन्यान्तर्गते सति स आत्मेश्वर इत्यभिधीयते । स एवेश्वरस्सत्त्वरजस्तमोभिर्विष्णुब्रह्मशङ्करेति संज्ञा लभते । आत्मा ज्ञानस्वरूपो नतु ज्ञातृस्वरूपस्तस्य ज्ञातृत्वमहंकाराद्युपाधिभिः प्रपञ्चस्यापि ज्ञेयत्वमज्ञानादेव । त्रिविधं सत्यत्वं प्रातिभासिकं, व्यावहारिकं पारमार्थिकं च । तत्र प्रातिभासिकस्य शुक्तिरजतादेर्व्यावहारिकसत्यरजतेन बाधः । व्यावहारिकसत्यत्वं घटपटादीनां तच्च पारमार्थिकसत्येन ब्रह्मदर्शनेन बाध्यते ब्रह्मणस्तु कस्यामप्यवस्थायां न बाधः । अत एव तत्परमार्थसत् । घटपटादीनां व्यवहारदशायां सत्यत्वं वस्तुतस्तु ते मिथ्याभूताः । स्वाप्निकपदार्थवत् । यथा स्वप्नगताः

पदार्था जाग्रद्दशायां न सन्त्यतो मिथ्या तथा पारमार्थिकदशायामभावादेते व्यवहारदशायां विद्यमाना अपि घटादयो मिथ्या । पारमार्थिकात्मज्ञानेन तद्बाधात् । कासुचिच्छ्रुतिषु सृष्टिराकाशादिक्रमेण कासुचिच्छ्रुतिषु तेज-आदिक्रमेण कुत्रचित्सर्वं ब्रह्मैव नान्यदित्युक्तम् । सर्वासां श्रुतीनामबाधित-प्रामाण्यात्तत्समन्वयोऽवश्यं कर्तव्यस्तथा चेदमेव सिध्यति यद्ब्रह्मैव सत्य-मिति पारमार्थिकदृष्ट्योक्तम् । आकाशादिक्रमसृष्टिस्तु व्यावहारिकी । अने-नापि प्रमाणेन जगतो व्यावहारिकसत्यत्वम् । नतु परमार्थसत्यत्वम् । यदि जगत्परमार्थसत्स्यात्तर्ह्यन्यत्किमपि नास्तीतिप्रतिपादिनी श्रुतिरनर्थिका स्यात् । एवं च सत्यानृते मिथुनीकृत्य नैसर्गिकोऽयं लोकव्यवहार इति मन्तव्यमत एवाज्ञानिदृष्ट्या तत्सत्यत्वं भासते । ज्ञानिदृष्ट्या च 'तस्य पिता अपिता भवति' इत्युक्तरीत्या तस्य मिथ्यात्वम् । न केवलं सर्वस्य जगतो मिथ्यात्वं श्रुत्या बोध्यतेऽपि तु स्वस्यापि मिथ्यात्वं श्रुतिर्निरभिमानितया ब्रूते । ननु मिथ्याभूतश्रुतेः सत्यज्ञानं कथमिति नच वाच्यम् । "यथा कर्मसु काम्येषु स्त्रियं स्वप्नेऽनुपश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने" इत्युप-निषदुक्तरीत्या मिथ्याभूतात्स्वप्नस्थस्त्रीदर्शनात्सत्यसमृद्धिप्राप्तिरिवासत्याया अपि श्रुतेः सत्यभूतात्मदर्शनस्य संभवात् । यथा वा स्वाप्निकपदार्थानाम-सत्यत्वेऽपि तज्ज्ञानस्य सत्यत्वं तथा मिथ्याभूताया अपि श्रुतेः सत्यात्म-ज्ञानम् । एतस्य सर्वजगतो मूलस्वरूपमनाद्यविद्या सा च त्रिगुणात्मिका प्रलयकालसमाप्तिवेलायामविद्यया जीवकृतकर्मभिश्च "तदैक्षत बहु स्यां प्रजायेय" इति रीत्या परमात्मा संकल्पयति तत आकाशादिक्रमेण सृष्ट्यु-द्गमः । ततश्च पंचीकृतपंचमहाभूतेभ्यः शरीरादीनि प्रादुर्भवन्ति । एवमुत्प-न्नशरीरे प्रविष्टं चैतन्यं जीव इत्यभिधीयते स नाणुः किन्तु व्यापकः सर्व-स्मिन्शरीरे सुखदुःखानुभवात् । स च जीवो मुक्तिपर्यन्तं स्थायी जन्मान्तरी-यकर्मजसुखदुःखसम्बन्धात् । ननु जन्मान्तरं नाङ्गीक्रियत इति चेज्जन्मसम-काले जायमानसुखदुःखानुभवस्यानुपपत्तिः । मातृस्तनपानादावप्रवृत्त्यापत्तिश्च । तदानीं कस्यापि कर्मणोऽसंभवात् । जीवो विस्मृतकण्ठस्थचामीकरपुरुष इवा-त्मविस्मृतेरज्ञानात्सुखदुःखानुभवभाक् । अज्ञानं लिङ्गशरीरं स्थूलशरीरं चेत्यु-पाधिस्तस्य सदा प्रत्यासन्नः । अयमुपाधिर्दशमस्त्वमसीति ज्ञानेन विस्मृता-त्मस्वरूपस्याज्ञानमिवात्मज्ञानेन जीवात्मपरमात्मैक्यज्ञानापरपर्यायेण नश्यति

सत्यज्ञानेन विना मिथ्याभूतदर्शनस्यानिवृत्तेः। एवमविद्यानाशे जीवो मुक्तो भवति। तस्य ज्ञानाग्निः प्रारब्धेतराणि संचितक्रियमाणानि कर्माणि नाशयति। अस्यां दशायां प्रारब्धकर्माणि भुञ्जानः स विगतशरीराद्यभिमानो जीवन्मुक्त इत्यभिधीयते प्रारब्धकर्मावसाने देहपाते स विदेहमुक्तो भवति। इयमेव परमा मुक्तिः। अस्यां जीवः परमात्मसायुज्यं नाम स्वरूपमधिगच्छति। नच मतान्तरवदल्पेनापि सेवकादिरूपेण भिन्नस्तिष्ठति। यद्यपि जीवः सदैवात्मस्वरूपस्तथापि भावरूपेणाज्ञानेनात्मानं सुखदुःखभाजं मनुते तदैव बद्ध इत्यभिधीयते तादृशाज्ञानस्य निवृत्तौ स एव मुक्त उच्यते। **साधनक्रमः**। वेदविहितवर्णाश्रमकर्मणा चित्तशुद्धिस्ततो ब्रह्मनिष्ठगुरुं प्रति शरणगमनं तेन तत्त्वमसीति ज्ञानोपदेशस्तच्छ्रवणमनननिदिध्यासनैः संन्यासाश्रममधिवसन्कर्माणि परित्यजंश्च स सुस्थिरज्ञानो मोक्षं लभते। कदाचिद्वामदेवादिवत्पूर्वजन्मकृतकर्मभिः शुद्धचित्तोऽत्र जन्मनि ज्ञानेन मुक्तो भवति। मोक्षार्थं ज्ञानमेव साक्षात् साधनम्। कर्मोपासने तु चित्तशुद्धिचित्तैकाग्र्यप्रापकत्वात्परंपरितसाधने। ज्ञानकर्मसमुच्चयस्तु नेष्टः। नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसंपत्, मुमुक्षुत्वं चेति साधनचतुष्टयसंपत्त्यनन्तरं ब्रह्मजिज्ञासा। अस्मिन्मतेऽनिर्वचनीयख्यातिः। प्रत्यक्षानुमानोपमानशाब्दार्थापत्त्यनुलब्ध्याख्यानि षट् प्रमाणानि। तत्रालौकिकार्थ आत्मनि शाब्दमेवं मुख्यं प्रमाणम्। अन्यदनुमानादि तदवष्टम्भेन प्रमाणं भवति। अत्र मते विवर्तवादः। तत्स्वरूपं स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्पते। यथा शुक्तौ रजतं रज्जौ भुजङ्गमश्च। ननु शुक्तिरजतादौ सारूप्यं विवर्तत्वे कारणं जीवजडयोः सारूप्याभावेन चिद्विवर्तत्वं प्रपंचस्य कथमिति चेन्नैतत्साधु। नहि सारूप्यनिबन्धनाः सर्वे विभ्रमा इति व्याप्तिरस्ति। असद्रूपादपि कामादेः कान्तालिङ्गनादिष्विव स्वप्नविभ्रमस्योपलम्भात्। किंच कादाचित्के विभ्रमे सारूप्यापेक्षा नानाद्यविद्यानिबन्धने प्रपंचे तदुक्तमाचार्यवाचस्पतिना—विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः। अनादिवासनोद्भूतो न सारूप्यमपेक्षते॥' इति। अस्य मतस्य सङ्ग्राहकः श्लोकः॥ "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इति॥

## ५ रामानुजमतम् ( विशिष्टाद्वैतमतम् )

विशिष्टाद्वैतशब्दार्थः-चिदचिद्विशिष्टस्य परमात्मनोऽद्वैतमथवा सूक्ष्मशरीरविशिष्टस्य कारणरूपस्य परमात्मनस्तथा स्थूलशरीरविशिष्टस्य कार्यरूपस्य परमात्मनश्चेत्युभयोरद्वैतम् । पदार्थास्त्रिविधा अचिच्चिदीश्वरभेदेन । तत्र प्रकृतिकालशुद्धसत्त्वभेदेनाचित्पदार्थस्त्रिविधः । तत्रापि प्रकृतिस्त्रिधा सूक्ष्मसूक्ष्मतरसूक्ष्मतमेतिभेदेन । साच क्रमेणाव्यक्ताक्षरतम इति संज्ञिका । ईश्वरः परमात्मा स एव ब्रह्मेत्यभिधीयते । चिदचित् ( जीवजड ) पदार्थात्मकमीश्वरस्य शरीरं तच्छरीरमपि स्थूलसूक्ष्मभेदेन द्विविधं सूक्ष्मशरीरयुतः परमात्मा स्थूलस्य जगत उपादानकारणम् । परमात्मन्यप्राकृताः शब्दस्पर्शरूपरसगन्धाः शक्तिज्ञानानन्दादयश्च गुणाः सन्ति । सच सर्वाश्रयो व्यापकश्च तज्ज्ञानं शरीरमपि व्यापकम् । सच पंचविधः परव्यूहविभवान्तर्याम्यर्चावतारभेदेन । स एव सूक्ष्मचिदचित्पदार्थयुक्तो जगत उपादानं विशेषसंकल्पयुक्तश्च निमित्तकारणं भवति । तथा कालाद्यन्तर्यामितया सहकारिकारणं च भवति । अयं परमात्मा सर्वेषां चेतनाचेतनवस्तूनां प्रेरकः कर्मानुकूलफलप्रदोऽप्युदासीनः सर्वजीवानां जडानां च नियन्ता कल्याणगुणपूर्णो हेयगुणप्रत्यनीकः सर्वान्तर्याम्यचिन्त्यशक्तिबलैश्वर्यवीर्यतेजःसंपन्नो भक्तिलभ्यश्चास्ति । जीवजडौ परमात्मनः शरीरभूते । एतद्विशिष्टपरमात्मातिरिक्तं जगति किंचिन्नास्ति । यद्यपि जीवजडौ विशिष्टपरमात्मनोऽनतिरिक्तौ तथापि केवलपरमात्मनस्तौ भिन्नौ नित्यौ च चिदपरपर्यायो जीवः स चाणुर्नतु व्यापकः । सच चेतन ईश्वराधीनकर्तृत्वगुणः स्वप्रकाशः सुखी नित्यः प्रतिशरीरं भिन्नश्च । सच बद्धमुक्तनित्यभेदेन त्रिविधः । ब्रह्मादिकीटान्ताः सर्वे संसारिजिवा बद्धाः । विमुक्तसंसाराः प्राकृतसूक्ष्मशरीररहिता वैकुण्ठे भगवत्संनिधिनिवासिन आविर्भूताष्टगुणा ये ते मुक्तजीवाः । मूलत एव संसारसंबन्धरहिताः परमात्मेच्छानुवर्तिनोऽसंकुचितज्ञाना येऽनन्तगरुडादयस्ते सर्वे नित्यजीवाः । जीवात्मानोऽनन्ताः । जगत्प्रवाहश्चानादिः । नित्यजीवाः स्वेच्छया लीलाविभूतिष्ववतारं धारयन्ति । एतेषु नित्यजीवेषु यथाधिकारं तारतम्यं वर्तते । मुक्तजीवेषु तारतम्यं नास्ति । तेषां न कोऽप्यधिकारो नवा तेषामवतारधारणम् । मुक्तौ जीवैः परमात्मसादृश्यं लभ्यते न त्वैक्यम् । जीवो ज्ञातृस्वरूप आनन्दस्वरूपश्च तथा कर्ता भोक्ता । तस्य शरीरं प्रकृ-

तिजन्यं पांचभौतिकं सच स्वयं परमात्मनः शरीरभूतः। जीवात्मा लिङ्गदेहोपाधिना संसरति। सच लिङ्गदेहः प्राकृतोऽनादिश्च। उपाधिभूतलिङ्गदेहत्यागेन जीवेन मोक्षो लभ्यते। मोक्षावस्थायामपि जीवस्य ज्ञातृत्वं न हीयते। मोक्षार्थं जीवस्य ब्रह्मविचारो विधीयते। तत्र पूर्ववृत्तं कर्म ब्रह्मज्ञानेऽङ्गभूतम्। न साधनचतुष्टयसंपत्त्यानन्तर्यं तत्रापेक्ष्यते। यत्रेश्वरनित्यजीवमुक्तजीवाश्च विविधभोगानुपभुञ्जते। यत्रच कर्मरूपाविद्या न संभवत्यसौ देशः शुद्धसत्त्वमित्यभिधीयते। एतत्सत्त्वं प्राकृतसत्त्वगुणतो विलक्षणम्। ज्ञानं स्वप्रकाशं चेतनं व्यापकं बुद्ध्यपरपर्यायं चास्ति। जीवेश्वरौ तदाधारभूतौ तयोर्धर्मो ज्ञानं तच्च स्वतः प्रमाणं बद्धदशायां तत्कर्मोच्छन्नं संकुचितं भवति मोक्षे तु तद्विकासितं भवति। प्रकृतिपदार्थो जडो नित्यश्च। तथा परमात्मस्वरूपमाच्छादितं भवतीति कर्मवश्या बद्धजीवा मन्यन्ते। इयं प्रकृतिः सत्त्वरजस्तम इति गुणत्रयात्मिका चतुर्विंशतितत्त्वात्मिका च। तानि तत्त्वानि प्रकृतिर्महत्तत्त्वमहंकारो मनः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च तन्मात्राणि पञ्च महाभूतानि चेति। एतेषु प्रथमतत्त्वं प्रकृत्याख्यं सर्वेषां जडानां मूलकारणम्। एतदतिसूक्ष्मं सृष्ट्यादौ परमात्मन इच्छया प्रकृतौ परिणम्यमानायां यथा यथा सूक्ष्मता हीयते तथा तथावस्थान्तरं भवति। तत्र प्रथमावस्था तम इत्यभिधीयते। द्वितीयावस्थाक्षरं, तृतीयावस्थाऽव्यक्तं च। इदं तृतीयमव्यक्तं नाम कार्योन्मुख्यव्यवस्था, अव्यक्तानन्तरं जायमानाः सर्वे परिणामा व्यक्ताः। तत्र प्रथमपरिणामो महत्तत्वम्। अत्र गुणत्रयसाम्यं नास्ति। त्रिष्वन्यतमो गुणः प्रबलो भवति। महत्तत्त्वं ब्रह्मणः शरीरम्। अस्माज्जायतेऽन्तःकरणवृत्तिर्बुद्धिनाम्नी निश्चयाख्या। महत्तत्त्वात्सत्त्वगुणप्राबल्येन जायमानः सात्त्विकोऽहंकारो वैकारिक इति कथ्यते। अस्मात्सात्त्विकाहंकारात्पंच ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चोत्पद्यते। एतदेव मनः स्मृत्यादीनां साधनं सर्वेन्द्रियाणां प्रेरकं संसारबन्धकारणभूतं च। अचिद्वस्तूनां यथा महत्तत्त्वादिरूपेण परिणामा भवन्त्येवं जीवात्मनो ज्ञानधर्मसंकोचविकासादयोऽवस्था भवन्ति। तथात्मनोऽपि सृष्ट्यादिसंकल्पादयोऽवस्था भवन्ति। जडव्यापाराः सदा परबुद्ध्यवलम्बनेन संभवन्ति। परमात्मनः सर्वे व्यापाराः स्वबुद्ध्यवलम्बनेन संभवन्ति। जीवस्य तु केचिदेव व्यवहारा ईश्वरबुद्ध्यवलम्बनेन केचित्स्वस्य परमेश्वरस्य चेत्युभयोर्बुद्धिमव-

लम्ब्य प्रवर्तन्ते । केवलमेव स्वबुद्धिमवलम्ब्य जीवेन व्यवहारः कर्तुं न श. क्यते । जडपदार्थाः सदान्यस्य शरीरं भवन्ति । आत्मत्वं तु तेषां नास्ति । तथेश्वरः सदात्मैव शरीरत्वं तस्य नास्ति । जीवस्तु स्थूलदेहस्यात्मा । ईश्वरस्य शरीरमित्युभयं भवति । अन्तर्नियामकत्वं चात्मशब्दप्रवृत्तिनिमित्तं तेन जीवः परमात्मेति द्वयमप्यात्मशब्देन व्यवह्रियते । अन्तर्यामित्वस्य परा काष्ठा परमात्मेति । ज्ञानं द्विविधं स्वरूपभूतं धर्मभूतं च । तत्र स्वरूपभूतज्ञानं जीवाभिन्नं धर्मभूतज्ञानं तु ततः पृथक् । एवंच स्वरूपभूतज्ञानदृष्ट्या ज्ञानस्वरूपो जीवः । स एवाहमिति प्रतीत्या भासमानत्वाज्ज्ञेयोऽपि । तथा तादृशज्ञानवत्त्वात् स एव ज्ञातृस्वरूपोऽपि । पञ्चीकृतपञ्चमहाभूतानि महत्तत्त्वमहंकारश्चेति सप्त तत्त्वानि प्रकृतिश्चेत्यष्टभ्यः शरीरोत्पत्तिः । ततस्तच्छरीरं पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्च भूषयति । भक्तिः प्रपत्तिश्चेति मोक्षसाधने । भक्तिर्भजनम् । अनन्यभावेन परमेश्वरः शरणीकरणीय इति प्रपत्तिः । साधनक्रमश्चेत्थम्—कर्मज्ञानयोगौ भक्तिकारणम् । साधनभक्तिः प्रपत्त्यङ्गम् । साच प्रपत्तिर्यत्र देहे तद्देहपात एव मोक्षः । अत्र मते प्रत्यक्षमनुमानमागमश्चेति प्रमाणत्रयम् । अन्यप्रमाणानामत्रैवान्तर्भावः । अत्र मते सत्ख्यातिः । जीवन्मुक्तिर्नास्ति । अत्र मतेऽद्वैतवाद्यादृतो विवर्तवादः खण्ड्यते परिणामवादश्च स्वीक्रियते । तत्तात्पर्यमित्थम्—जगति विद्यमानानि सर्ववस्तूनि सत्यानि तानि मूलप्रकृतिपरिणामभूतानि च । श्रुतिगतानि ‘ असत्यं ’ ‘ नास्ति ’ इति पदानि न मिथ्यार्थबोधकानि किन्तु विनाशित्वबोधकानि । परिणामिपदार्थस्वरूपं तत्तदवस्थासु भिद्यतेऽतस्ते पदार्था असत्या विनाशिन इत्युच्यन्ते नतु मिथ्याभूतत्वं तेषामिति मन्तव्यम् । एवं च जगत्सत्यमिति राद्धान्तः ।

## ६ अद्वैतविशिष्टाद्वैतयोर्वैलक्षण्यस्य स्थलानि ।

| | |
|---|---|
| १ आत्मरूपमेकमेव अन्यन्नास्त्येव । | १ चिदचिद्रूपशरीरविशिष्ट आत्मैक एव । तच्छरीरादन्यत्किंचिन्नास्ति । |
| २ आत्मा निर्विशेषो निर्गुणश्च । | २ आत्मा सर्वज्ञत्वादिविशेषयुक्तः । अनन्तकल्याणगुणाश्रयः । तत्र हेयगुणा न सन्ति । |

| ३ आत्मा ज्ञानस्वरूपो न ज्ञानगुणवान् । अतएव तस्य न वस्तुतो ज्ञातृत्वम् । | ३ आत्मा ज्ञानस्वरूपोऽपि ज्ञानगुणाश्रयः । वस्तुत एव तस्य ज्ञातृत्वम् । |
|---|---|
| ४ आत्मा स्वरूपेण कूटस्थनित्यः । तेनैव रूपेणाद्वितीयश्च । | ४ परमात्मा स्वरूपेण कूटस्थनित्यः । चिदचिद्रूपशरीरविशिष्टरूपेण तु परिणामिनित्यः । विशिष्टरूपेणैवाद्वितीयः । |
| ५ परमात्मन एव मायोपाधिकमीश्वरत्वमविद्योपाधिकं जीवत्वम् । जडं तु प्रातिभासिकं मिथ्यैवेत्येकमेव तत्त्वम् । | ५ परमात्मैवेश्वरः । तच्छरीरभूतो जीववर्गो जडवर्गश्च । ततो भिन्न एवेति । चिदचिदीश्वररूपं तत्त्वत्रयम् । |
| ६ परमात्मनः सकाशादभिन्नापि भिन्नेव त्रिगुणा परमात्मशक्तिरज्ञानादिपदवाच्या तदुपहितः परमात्मा जगतो मूलप्रकृतिः । | ६ परमात्मनः सकाशाद्वस्तुतो भिन्नं त्रिगुणात्मकं प्रधानं जगतो मूलप्रकृतिः । |
| ७ अस्मिन्मते विवर्तवादः । अज्ञानेन परमात्मन्येवेदं जगद्भासत इत्येवंरूपः । अत्र रज्जुसर्पदृष्टान्तः । | ७ अस्मिन्मते परिणामवादः प्रधानमेवान्तर्यामीश्वरसांनिध्याज्जगदाकारेण परिणमत इतिरूपः । अत्र पयोदधिदृष्टान्तः । |
| ८ परमात्मविवर्तभूतं प्रातिभासिकमिदं जगन्मिथ्यैव । | ८ प्रधानपरिणामभूतं चेदं जगत्सत्यमेव । |
| ९ अत्र मतेऽनिर्वचनीयख्यातिः । अनिर्वचनीयं चेदं जगदज्ञानदोषेण भासत इतिरूपा । | ९ अत्र मते सत्ख्यातिः । वस्तुतः सत्यमेव जगत्प्रतीयत इतिरूपा । |
| १० शुक्तिरजतस्थले स्वप्नादौ चानिर्वचनीया एवार्था भासन्ते । | १० शुक्तिरजतस्थले स्वप्नादौ च सत्या एवार्थाः प्रतीयन्ते । |
| ११ तत्त्वमस्यादिशास्त्रमपि जगदन्तर्गतत्वादसत्यमेव । तथापि त- | ११ तत्त्वमस्यादिशास्त्रं सत्यमेवात एव तत्त्वज्ञानसाधकम् । |

| | |
|---|---|
| स्वज्ञानसाधनं भवत्येव । स्वाप्नपदार्थवत् । | |
| १२ प्रमाणानि षट् । प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्ध्याख्यानि । | १२ प्रमाणानि त्रीणि । प्रत्यक्षानुमानागमरूपाणि । |
| १३ परमात्मनोऽभिन्ना जीवाः । तेषां परमात्मवदेव ज्ञानस्वरूपत्वं नतु वस्तुतो ज्ञानाश्रयत्वं किन्त्वन्तःकरणोपाधिकं ज्ञातृत्वम् । | १३ जीवाः परमात्मनः सकाशाद्भिन्नास्तच्छरीरभूता अपि ज्ञानस्वरूपा ज्ञानगुणकाश्चेति तेषां वस्तुत एव ज्ञातृत्वम् । |
| १४ जीवो व्यापकः । | १४ जीवोऽणुरूपः । |
| १५ जीवो ब्रह्मस्वरूपत्वादेक एव । तदनेकत्वं त्वौपाधिकम् । | १५ जीवा वस्तुत एव नानाविधाः । जीवाद्वैतं तु प्रकाराद्वैतम् । |
| १६ साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा । | १६ कर्मस्वरूपज्ञानानन्तरं ब्रह्मजिज्ञासा । |
| १७ तत्त्वमस्यादिमहावाक्यैरात्मसाक्षात्कारेऽविद्यानिवृत्त्या शरीरसत्त्वेऽपि जीवद्दशायां मुक्तिः । | १७ तत्त्वमस्यादिमहावाक्यजन्योपासनादार्ढ्येन परमात्मा प्रसन्नो भवति तथापि यावच्छरीरं सुखदुःखानुभवावश्यकत्वान्न जीवद्दशायां मुक्तिः । |
| १८ प्रारब्धकर्मणां भोगेन क्षये शरीरत्यागे स्वस्वरूपेऽवस्थितिरूपा विदेहमुक्तिः । | १८ प्रारब्धकर्मक्षये लौकिकशरीरत्यागे दिव्यदेहप्राप्त्या परमात्मना सह परमं साम्यं भवति । इयमेवास्मिन्मते मुक्तिः । |
| १९ मुक्तौ जीवब्रह्मणोर्भेदो नास्ति । | १९ मुक्तावपि जीवब्रह्मणोर्भेदोऽस्ति । |
| २० मुक्तावस्थायां न लेशतोऽपि दुःखं न सुखं भवति । | २० मुक्तावस्थायां दुःखलेशेनाभिन्नः सुखाधिक्यमनुभूयते । |

## ७ प्रमाणसंख्याविचारः ।

श्रीमच्छङ्कराचार्याणां प्रत्यक्षादीनि त्रीणि प्रमाणानि संमतानि चत्वारि षड् वा । यतः काठकोपनिषदि त्रिणाचिकेत' १।१।१७ इति कारिकायां भा-

ष्ये प्रत्यक्षानुमानागमैरिति प्रमाणत्रयस्य ग्रहणं कृतम् । मुण्डकोपनिषदि परीक्ष्य लोकान् ' १।२।१२ इत्यत्र भाष्ये प्रत्यक्षानुमानोपमानागमैरिति निर्दिश्यते । अन्यत्रच बहुषु भाष्यस्थलेषु प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्ध्याख्यानि षट् प्रमाणान्यङ्गीकृत्य विचारः क्रियते। तत्रेदं सर्वसंमतं यदाचार्याणां भाष्यकृतां षडपि प्रमाणानि संमतानि। यतो जैमिनीयनये षट् प्रमाणानि पूर्वोक्तान्यादृतानि । उत्तरमीमांसाभाष्यमेतत् । उत्तरमीमांसायाश्च पद्धतिरियं पूर्वमीमांसास्थं यदनभिमतं तत्खण्ड्यते । यदभिमतं तन्न खण्ड्यते प्रमाणसंख्याखण्डनं तु कुत्राप्युत्तरमीमांसायां न दृश्यते तेन पूर्वमीमांसोक्तं प्रमाणषट्कमप्यत्राभिमतं तदेव भाष्यकृतामपि संमतम् । षट्स्वपि प्रमाणेषु वेदरूपशाब्दप्रमाणस्य श्रेष्ठत्वं ' वेदस्यैवाप्रतिहतं प्रामाण्यं रवेरिव रूपविषये ' इति शारीरभाष्ये निर्दिशद्भिराचार्यैरङ्गीकृतमित्यन्यत् । तर्हि काठकमुण्डकभाष्यनिर्दिष्टसंख्ययोः का गतिरिति चेत् । तत्रेदमुच्यते । पूर्वोक्तरीत्यागमप्रामाण्यमवश्यमङ्गीक्रियतामन्यप्रमाणविषये तु नास्माकमाग्रहः कणादादिवत् त्रयं चतुष्टयमेव वा भवतु प्रमाणानामिति द्योतयितुं तथा निर्देशः । तेनाचार्याणां प्रमाणषट्कमेव संमतं तत्राप्यागमप्रामाण्यस्य श्रेष्ठत्वमत एव सर्वत्र प्रमाणसंख्यानिर्देशेषु आगमप्रमाणस्य ग्रहणमिति सर्वमनवद्यम् ।

## ८ अग्निहोत्रादीनां स्वरूपम् ।

यस्याग्निहोत्रमदर्शमपौर्णमासमित्यादिमन्त्रेऽग्निहोत्रदर्शपौर्णमासचातुर्मास्याग्रयणानां निर्देशः । तत्स्वरूपं कथ्यते ।

१ अग्निहोत्रम् । अग्निहोत्रं जुहोतीति श्रुत्या विहितं प्रतिदिनमनुष्ठीयमानं कर्म । तच्च सायं प्रातरिति प्रत्यहं द्विः क्रियते । तत्र प्रत्येकमाहुतिद्वयम् ।

२ दर्शपौर्णमासम् । अयं च यागोऽग्न्याधानानन्तरं प्रतिपक्षं पौर्णमास्याममायां च भवति । दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यनेन विहितः । अत्र प्रजानानुयाजादयोऽङ्गम् ।

३ चातुर्मास्यम् । अयं चातुर्मास्ययागो दर्शपौर्णमासवदेवाग्निहोत्रानन्तरं भवति । चातुर्मास्यं नाम सप्तसु हविःसंस्थास्वन्यतमा संस्था । ताः सप्तहविःसंस्थाः १ अग्निहोत्रम् २ दर्शपौर्णमासौ ३ आग्रयणं ४ पिण्डपितृयज्ञः ५ चातुर्मास्यानि ६ निरूढपशुबन्धः ७ सौत्रामणीतिसंज्ञकाः । चातुर्मास्य-

यागे वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयप्रभृतीनि पर्वाणि चतुर्षु चतुर्षु मासेषु भवानि तैः समुदितैर्यागश्चातुर्मास्यसंज्ञकः । अस्य यागस्य फलं चिरस्थायि । ' अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति श्रुतेः ।

४ आग्रयणम्—एतदपि पूर्वोक्तसप्तहविःसंस्थान्तर्भूतमेव कर्म । अग्रे अयनं भक्षणं येन कर्मणा तदाग्रयणं प्रथमद्वितीययोर्ह्रस्वदीर्घव्यत्यय आर्षः । अत्र नवानां व्रीहिश्यामाकयवानां हविषां भक्षणमुक्तम् । तस्य च शरत्काल उक्तः । अथवा यत्र नवसस्यानामग्रपाको देवान्नीयते तदाग्रयणं नाम नित्यं कर्म तेनानिष्ट्वा सर्वमेव सस्यं नाश्नीयात् ।

तथाच ' नास्य ब्राह्मणोनाश्वान् गृहे वसेत् ' इत्यनेनाग्निहोत्रिणो व्रतमध्य एवातिथिभोजनं विहितम् । तदुक्तमतिथिवर्जितमासप्तमांस्तस्य लोकान् हिनस्तीति ।

## ९. मुण्डकोपनिषत्तात्पर्यम् ।

मुण्डकोपनिषदि त्रीणि मुण्डकानि तत्र प्रतिमुण्डकं खण्डद्वयम् । एवं षट् खण्डानि । तत्र प्रथमखण्डे—आदौ ब्रह्माथर्वादिगुरुशिष्यपरंपरा प्रदर्शिता । तत्र महागृहस्थः शौनकोऽङ्गिरसं समिद्ग्रहणपूर्वकं सप्रश्रयं शरणगमनेन पप्रच्छ। हे गुरो उपदिश तदेकं यस्मिन् विज्ञात इदं सर्वं विज्ञातं भवतीति । तमेतं प्रश्नमपाकर्तुमाङ्गिराः प्राह । वेदार्थाभिज्ञानां मतेनात्र जगति परा, अपरेति विद्याद्वयं वर्तते । तव प्रश्नस्योत्तरार्थं परा विद्यैवालम् । परं, अपरविद्यायाः परिहारो यावन्न कृतस्तावत्परविद्याप्राप्तिर्न भवति । तदर्थं परिहाराय, अपरा विद्या प्रथमं प्रोच्यते । साच साङ्गवेदचतुष्टयरूपा । तस्यामपरविद्यायां कर्माण्युक्तानि । तान्यपहाय ज्ञानं परब्रह्मात्मकमुररीकर्तव्यं तदर्थं परा विद्योच्यते । ततश्च परा विद्येत्यनेनोपनिषत्प्रतिपाद्यं ब्रह्मज्ञानं ग्राह्यं नोपनिषच्छब्दराशिः । यतस्तदधिगमेऽपि वैराग्यादिसाधनचतुष्टयसंपत्तिमन्तरेण ब्रह्मप्राप्तिर्दुर्लभा । अत्र चक्षुरादीन्द्रियागोचरं निरवयवं शुद्धं सर्वव्यापीत्यादि रूपं भूतकारणं ब्रह्म प्रोक्तम् । तज्ज्ञानं च विवेकिनामेव सुगममित्युक्तम् । ततो भूतकारणत्वं दृष्टान्तत्रयेण यथोर्णनाभिरित्यादिनोक्तम् । एतैस्त्रिभिर्दृष्टान्तैर्विजातीयं सजातीयं च समस्तं जगत् निमित्तान्तरानपेक्षाददृश्यादिरूपादक्षरात्संभवतीति प्रतिपादितम् । अथच मुष्टिगतानि बदराणि यथा पतन्ति तथा ब्रह्मणः सका-

श्चाज्जगत् न जायते किंतु तदुत्पत्तावस्ति क्रमोऽन्नप्राणादिरूपः । स चोक्तः । तपसा चीयत इत्यादिना । अस्यैवार्थस्योपसंहारोऽन्त्यमंत्रेण ॥ १ ॥

पूर्वखण्डे परापरे विद्ये उक्ते तयोर्विषयविभागोऽत्र खण्डे वर्ण्यते । तत्र षड्भिर्मन्त्रैः कर्माग्निहोत्राद्यात्मकमुक्त्वा तदनुष्ठानप्रकारः फलं चोक्तम् । ततः प्लवा ह्येत इत्यारभ्य ज्ञानरहितं कर्म श्रौतं स्मार्तंच न श्रेयसे किंतु तदनुष्ठायिनोऽन्धेनैव नीयमाना अन्धा इव विभ्रमन्ति गर्तकण्टकादौ । ततः पुण्यवशात्कंचित्कालं स्वर्गे स्थिता मानुषं जन्म ततोऽपि वा हीनतरं पश्वादिजन्म लभन्ते । ये तु श्रौतस्मार्तकर्म परिहाय संन्यासिनो हिरण्यगर्भादीनुपासते तेऽर्चिरादिमार्गेण हिरण्यगर्भलोकमाप्नुवन्ति । परं तत्रापि न निरतिशया मुक्तिः । अतः संसारगतिभूतान् लोकान् कदलीगर्भवदसारान् मत्वा वैराग्यसंपन्नो मुमुक्षुर्ब्रह्मविज्ञानार्थं ब्रह्मनिष्ठं श्रोत्रियं गुरुं गच्छेत् । सोऽपि विद्वान् गुरुः साधनचतुष्टयसंपन्नाय तस्मै शिष्याय ब्रह्मविद्यामुपदिशेत् । एवं चात्र खण्डे यज्ञादयो विनाशिनो विनाशि फलं संपादयन्ति । ज्ञानं तु गुरोः सकाशाज्जायमानं निरतिशयं मोक्षं यच्छतीति विषयविभागो दर्शितः ॥ २ ॥

अथ तृतीयखण्डेऽक्षरब्रह्म प्रतिपाद्यते । यतः 'येन विज्ञातेन सर्वमिदं विज्ञातं भवति' इति शिष्येण पृष्टं तत्प्रतिवक्तव्यम् । तत्प्रकारश्चेत्थम् । भोः शिष्य, ब्रह्माक्षरपुरुषाख्यं ज्ञेयं तस्मादेव सर्वमिदं प्रभवति । ततश्च ज्ञातेन ब्रह्मरूपोपादानकारणेन ततो जायमानमिदं कार्यरूपं जगत् सर्वं विज्ञातं स्यात् । अत्रोपादानोपादेयभावोऽध्यासद्वारा । तदर्थं प्रथममन्त्रेऽग्निस्फुलिङ्गदृष्टान्तमाह । सच यथा—सुदीप्तादग्नेर्यथा विस्फुलिङ्गा भवन्ति तद्वत् अक्षरब्रह्मणः सर्वे भावा उत्पद्यन्ते तत्रैव विलीयन्तेच । तदग्रे मन्त्राष्टकेन सर्वेषां प्राणादीनामुत्पत्तिर्ब्रह्मणः सकाशादिति प्रतिपादितम् । चरममन्त्रे एतत्सर्वं पुरुष एव । अर्थादेतत्सर्वं पुरुषेऽध्यस्तम् । ततश्चाधिष्ठानभूतरज्जुज्ञानेऽध्यस्तवस्तूनां सर्पादीनां ज्ञानं यथा तथाधिष्ठानभूतब्रह्मज्ञाने सर्ववस्तुज्ञानं सुकरम् । तच्च ब्रह्म हृदयगुहायां निहितं तत्र तज्ज्ञात्वा ज्ञानवान् अस्मिन्नेव जन्मनि अविद्याग्रन्थिं नाशयति । अत्र मन्त्रे इहेतिपदं जीवन्मुक्तिं बोधयति ॥ ३ ॥

अथ चतुर्थखण्डे ब्रह्मज्ञानं तत्प्राप्त्युपायश्च प्रोच्यते । सचैकाग्रेण चेतसा

ब्रह्मध्यानरूपः । ब्रह्मध्यानस्य परा काष्ठा ध्यातृध्येयादिभेदविस्मरणपूर्वकं ब्रह्म-मयतासंपादनम् । ब्रह्मज्ञाने प्रवृत्त्यर्थं ॐ काररूपप्रतीकोपासनमप्यत्र प्रोच्यते । पूर्वोक्तप्रकारेण ब्रह्ममयतासंपादने विवेकिनां हृदये पूर्णमानन्दरू-पं ब्रह्म प्रकाशते । ततस्तेषां हृदयग्रन्थिर्भिद्यते । सर्वसंशयोच्छेदः कर्मक्षयश्च भवति । एतदेव संक्षेपतस्त्रिभिरन्तिमैर्मन्त्रैर्बोधितम् ॥ ४ ॥

पूर्वखण्डे सत्यमक्षरं येन प्राप्यते तज्ज्ञानं तत्प्राप्त्युपायश्च योगोऽभिहितः। अत्र तत्सहकारि सत्यादिसाधनं वक्तुमुपक्रम्यते । किंच पूर्वं कृतमपि तत्त्व-निर्धारणं दुर्ज्ञेयत्वात्पुनः प्रकारान्तरेण क्रियते । स प्रकारश्चेत्थम् । अस्ति कश्चन वृक्षश्छिद्यमानरूपत्वाच्छरीररूपः । यत्र द्वौ पक्षिणौ सखिभूता-वारूढौ । तयोरन्यतरो जीवाख्यः स्वादूनि कर्मफलान्यत्ति स्म शिवं च विसस्मार। अथ चान्यतरः शिवाख्यः केवलं भक्षयन्तं तं पश्यत्येव नतु स्वयं भक्षयति । यश्च फलभोजी पक्षी दीनभावेन सर्वकर्मासमर्थोऽहं किं मे जीवितेनेत्यादिना शोचति । अन्यस्तु द्रष्टा न शोचति कर्मफलोपभोगाभावात् । ततः पूर्वोक्तो जीवः शुभसंचितवशात् परमकारुणिकेन गुरुणा दर्शितयोगमार्गः शमादि-संपन्नः समाहितात्मा सन् असंसारिणमीशं तन्महिमानं स्वाभेदरूपं पश्यति तदा दीनभावाद्विमुक्तः सन् कृतकृत्यो भवति । एतादृशाभेदज्ञानप्राप्तौ साधकस्य जीवस्य सत्यं तपश्च सहकारिसाधनम् । ततः परं प्राप्यमाणं ब्रह्म दिव्यमिन्द्रियागोचरं केवलज्ञानगम्यमित्यादिरूपेण वर्णितम् । उपसंहारे च ब्रह्मप्राप्तौ सर्वलोकावाप्तिरूपं फलं प्रदर्शितम् ।

षष्ठे खण्डे–पूर्वखण्डोक्तं ब्रह्म मुमुक्षुभिर्निष्कामैर्लभ्यते न कामकामि-भिः । एवं ब्रह्मदर्शनेन पर्याप्तकामा मुमुक्षवः प्रकृतशरीरे विद्यमान एव मुक्ता भवन्ति । जीवन्मुक्ता एव भवन्तीति तात्पर्यम् । अथ चात्र खण्डे ब्रह्म प्रवचनादिना न लभ्यते किन्तु तद्विषयया दृढेच्छया लभ्यत एवमाधिगत आत्मा स्वीयं रूपं साधकं प्रति दर्शयति । ततो जीवन्मुक्तास्ते देहपरित्यागे विदेहमुक्ता भवन्ति । समुद्रं गतानां गङ्गादिसरितां यथा नामरूपाद्वि-मुक्तिस्तथा परं पुरुषमापन्नानां मुक्तानां नामरूपाद्विमुक्तिः । तत एतद्ब्रह्म वेद यः स ब्रह्मरूपो भवतीत्युक्त्वा तत्कुलेऽपि न कश्चनाब्रह्मविद्भवतीत्यर्थवाद उक्तः । अयमर्थो मन्त्रेणोक्त इति मन्त्रप्रदर्शनेनोक्तम् । यैः शिरोव्रतमनु-ष्ठितं तेभ्य एवेयं विद्या प्रदेयेति मन्त्रार्थः । ततः पूर्वखण्डोक्ता परम्परा

द्योतिन्याख्यायिका समापिता ॥ तत्र ' नैतदचीर्णव्रतोऽधीते ' इत्यनेनैवं द्योत्यते यत्—येनाथर्वणिकेन शिरोव्रतमनुष्ठितं तेनैव गुरुणा यैः शिरोव्रतमनुष्ठितं तेभ्य एव शिष्येभ्यः प्रदेया । शिरोव्रते हि एकर्षिनामकोऽग्निः पात्रान्तरिततया शिरसि धारणीयो भवति । एवं च मुण्डके शिरस्याग्निधारणेनेयं मुण्डकोपनिषद्विद्या बोध्यते । अत एवास्या उपनिषदो मुण्डकेति संज्ञा । तेन ' हर्टेल ' महाभागेन कल्पितं जैनानां स्यादियमुपनिषत् ' मुण्डकम् ' इति संज्ञाघटितत्वात्तेषां च मुण्डितमुण्डत्वादिति । तदपास्तम् ।

## १० अन्वयक्रमेण यत्र व्याख्यानं तानि स्थलानि ।

भगवत्पूज्यपादश्रीमच्छंकराचार्याणामियं व्याख्यानशैली यत्ते मूलक्रमेण पदानां व्याख्यानं कुर्वन्ति कुत्रचिदन्वयक्रमेण व्याख्यानं मध्ये मध्ये दृश्यते तथात्र मुण्डकोपनिषदि केषुचित् मन्त्रेषु । ते मन्त्रा अधस्तात्प्रदर्श्यन्ते ।

१—१।२।६
२—१।२।११
३—१।२।१३
४—२।२।९
५—३।२।६

## ११ अध्याहारस्थलानि ।

अत्र मुण्डकोपनिषदि श्रीशंकराचार्यैर्व्याख्यानसमयेऽध्याहारास्तत्तच्छब्दानां कृताः । तानि स्थलानि तत्तच्छब्दनिर्देशपुरःसरम् ।

प्रथममुण्डके द्वितीयखण्डे पञ्चमो मन्त्रः । अत्र भूत्वेत्यस्याध्याहारः । १।२।१२ अत्र ' इह ' इतिपदं तदग्रे किं कृतेनेत्यादौ ' किम् ' इत्यस्य चाध्याहारः ॥

## १२ कर्मगतीनां त्रैविध्यम् ।

केवलमिष्टापूर्तदत्तादिकर्मभिर्नरा दक्षिणमार्गेण गच्छन्ति । अयमेव दक्षिणमार्गो धूममार्ग इति कथ्यते सच धूमो रात्रिस्तथा कृष्णः ॥ इत्यादिना

भगवद्गीतासूक्तः । अनेन मार्गेण स्वर्गं गता यावत्कर्मफलोपभोगं तत्र स्थित्वा भूलोकेऽवशिष्टकर्मानुसारेण जन्मलब्धये पुनरावर्तन्ते । तथाचोक्तं ' क्षीणे पुण्ये मृत्युलोकं विशन्ति ' इति ।

द्वितीयश्च—उत्तरमार्गः स एवार्चिमार्ग इति कथ्यते । सच ' अग्नि-र्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥ " इत्यादिनोक्तः । अयं मार्गो निष्कामकर्मिभिरुपासकैश्च लभ्यते । अनेन मार्गेण हिरण्यगर्भब्रह्मलोकं गच्छन्ति । तत्पर्यन्तं गमने मध्ये येऽग्न्यादयो लोकास्तत्र गतानामुपासकानां साहाय्यार्थं कश्चन पुरुष आगच्छति स आतिवाहिक इत्यभिधीयते स उपासकान् ब्रह्मलोकं गमयति । " तत्रामानव पुरुषः स एनान् ब्रह्मलोकं गमयति " इति श्रुतेः । तत्साहाय्येनोपासका हिरण्यगर्भलोकं गत्वा तत्रैव निवसन्ति न ततो निवर्तन्ते पूर्वोक्तमार्गगामिन इव । ततो हिरण्यगर्भो यदा स्वाधिकारसमाप्तौ ब्रह्म गन्तुमुद्यतो भवति तदा तानुपासकान् ज्ञानेन संयोजयति । ततो ज्ञानसंपन्नास्त उपासका ब्रह्मणा सह मुक्ता भवन्ति ' परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ' इति श्रुतेः । एवं चास्मिन्मार्गे ज्ञानप्राप्ति-र्नियता पुनरावृत्तिश्च नास्तीति पूर्वस्माद्विशेषः ।

तृतीयश्च—येच नेष्टादिकारिणो न चोपासकास्ते ' पुनरपि जननं पुनरपि मरणम् ' इति भूयोभूयोजननमरणरूपं संसारमनुभवन्ति तत्तानि नारककीटादियोनीर्लभन्ते । तथाच श्रुतिः–'अथैतयोः पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम् ' इति । एवं प्राणिनां त्रिविधा गतिः ।

## १३ जीवन्मुक्तिविदेहमुक्तिस्वरूपम् ।

अतोऽन्ये पूर्वसंचितवशात्साधनचतुष्टयसंपन्नाः श्रीगुरोरधिगतजीवपरमात्मैक्यभावाः संसारात्प्रमुच्यन्ते । तदा तेषां संचितक्रियमाणकर्मणोर्विनाशः । प्रारब्धं तूपभोगेन नश्यति । तावत्पर्यन्तं जीवन्मुक्तिः । प्रारब्धक्षये देह-नाशे तस्यैव विदेहमुक्तिः । जीवन्मुक्तेर्वर्णनमत्रोपनिषादि ' एतद्यो वेद नि-हितं गुहायां सोविद्याग्रन्थिं विकरतीह सोम्य ॥ २।१।१० " इत्यत्र ' पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः ॥ ३।२।२" इत्यत्र च ' इह ' इति पदम् ॥ प्राकृतिकमरणे यथाप्राणादिसप्तदशावय-वकलिंगशरीरस्योर्ध्वगमनम् । तथा मुक्तस्य विदेहमुक्तिसमये न । ' न

तस्य प्राणा उत्क्रामन्ति, इहैव समवलीयन्ते ' इति श्रुतेः । प्राकृतिकमरणे पुनर्देहग्रहणार्थं लिङ्गशरीरस्योर्ध्वगमनमावश्यकम् । मुक्तौ देहग्रहणरूपप्रयोजनाभावादत्रैव प्राणादीनां वाय्वादिषु लयः ॥

## १४ जीवन्मुक्तिमीमांसा ।

अत्रोपनिषदि जीवन्मुक्तिरस्ति द्वयोर्मन्त्रयोः ' इह ' इति पदोपलम्भात् । इति श्रीशङ्कराचार्याणामाशयः । एतदिहेति पदं भिन्नार्थकं तेन न जीवन्मुक्तिबोधकमिति रामानुजाचार्याणामाशयस्तैः श्रीभाष्ये जीवन्मुक्तिर्नाङ्गीकर्तुं शक्यत इति स्पष्टमुक्तत्वात् । अनयोर्मन्त्रयोर्व्याख्यानं रामानुजमतानुयायिरङ्गरामानुजकृतप्रकाशिकायां यथाकृतं तथाधस्तान्निर्दिश्यते । स्वयं रामानुजाचार्यकृतमुपनिषद्व्याख्यानं न लभ्यते । यत इयं रङ्गरामानुजकृतप्रकाशिकैवाध्ययनाध्यापनादिषु वर्तते । ततस्सैवाधस्तान्निर्दिष्टा तदधः शाङ्करभाष्यं निर्दिष्टं तेन जिज्ञासूनामुभयोर्भेददर्शने सौकर्यं स्यात् । अनन्तरं श्रीभाष्यस्थं जीवन्मुक्तिखण्डनं प्रदर्शितम् —

मुं. २।१।१०

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।
एतद्यो वेद निहितं गुहायां सो विद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥

रं. रा. प्रकाशिका—यस्मादसौ सर्वभूतान्तरात्मा तस्मात्सर्वमिदं पुरुषोपादानकत्वात्पुरुष एव तस्मात्तद्विज्ञाने सर्वस्यापि ज्ञानमुत्पद्यत इति भावः । तस्य जगत्सृष्ट्यनुकूलः कर्मशब्दितो व्यापारः । स्रष्टव्यालोचनात्मकं तपः । एको व्यापी सदा शुद्धो निर्गुणः प्रकृतेः पर इति ब्रह्मशब्दितप्रकृतिपरभूतमुक्तात्मनाममृतवत्परमानन्दतया भोग्यभूतं ब्रह्माप्यक्षरपुरुष एवेत्यर्थः । हे सोमार्ह हृदयगुहावर्त्येतदक्षरं ब्रह्मेह लोके यो वेद स ग्रन्थिवद् दुर्मोचामविद्यां विकिरति निरस्यति ' कॄ विक्षेपे ' इति धातुः ॥ १० ॥

शाङ्करभाष्यम्—एवं पुरुषात्सर्वमिदं संप्रसूतम् । अतो वाचारम्भणं विकारो नामधेयमनृतं पुरुष इत्येव सत्यम् । अतः पुरुष एवेदं विश्वं सर्वम् । न विश्वं नाम पुरुषादन्यत् किंचिदस्ति । अतो यदुक्तं तदेवेदमभिहितम् ' कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ( मुं. १।१।३ ) इति । एतस्मिन्हि परस्मिन्नात्मनि सर्वकारणे पुरुषे विज्ञाते पुरुष एवेदं विश्वं नान्य-

दस्तीति विज्ञातं भवतीति । किं पुनरिदं विश्वमित्युच्यते । कर्माग्निहोत्रादि लक्षणम् । तपो ज्ञानं तत्कृतं फलमन्यदेव । तावद्धीदं सर्वम् । तच्चैत द्ब्रह्मण कार्यम् । तस्मात्सर्वं ब्रह्म परामृतं परममृतमहमेवेति यो वेद निहितं स्थित गुहाया हृदि सर्वप्राणिनां स एवं विज्ञानादविद्याग्रन्थि ग्रन्थिमिव दृढीभूता-मविद्यावासनां विकिरति विक्षिपति विनाशयति इह जीवन्नेव न मृतः सन् हे सोम्य प्रियदर्शन ॥ १० ॥

मुं. ३।२।२

कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥

रङ्गरामानुजप्रकाशिका—यस्तु देवत्वम नुष्यत्वादीन् कामान् भोग्यतया मन्यमानः कामयते स तत्र देवत्वमनुष्यत्वादौ कामभिः कामैस्तत्तत्कामवशा-दिति यावत् । देवमनुष्यादिरूपेण जायते पर्याप्ते परिपूर्णे ब्रह्मणि कामना-वतो विदितात्मतत्त्वस्यास्मिन्नेव जन्मन्याशा लुप्ता न जन्मांतरप्रसक्तिरित्यर्थः । कृतात्मन इत्यत्र शब्ददर्दुरं करोतीत्यत्रेव कृधातोर्ज्ञानमर्थः ॥ २ ॥

शाङ्करभाष्यम्-मुमुक्षोः कामत्याग एव प्रधानं साधनमित्येतद् दर्शयति । कामान्यो दृष्टादृष्टेष्टविषयान् कामयते मन्यमानस्तद्गुणांश्चिन्तयानः प्रार्थयते, स तैः कामभिः कामैर्धर्माधर्मप्रवृत्तिहेतुभिर्विषयेच्छारूपैः सह जायते तत्र तत्र, यत्र यत्र विषयप्राप्तिनिमित्तं कामाः कर्मसु पुरुषं नियोजयन्ति, तत्र तत्र तेषु तेषु विषयेषु तैरेव कामैर्वेष्टितो जायते । यस्तु परमार्थतत्त्वविज्ञाना-त्पर्याप्तकामस्य कृतात्मनोऽविद्यालक्षणादपररूपादपनीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य तस्य कृतात्मनस्तु इहैव तिष्ठत्येव शरीरे सर्वे धर्मा-धर्मप्रवृत्तिहेतवः प्रविलीयन्ति प्रविलीयन्ते विलयमुपयान्ति नश्यन्तीत्यर्थः । कामास्तज्जन्महेतुविनाशान्न जायन्त इत्यभिप्रायः ॥ २ ॥

रामानुजीयश्रीभाष्यस्थं जीवन्मुक्तिखण्डनम् ।

( ब्रह्मसूत्र-१-१-४५, १५७ बॉम्बे संस्कृतसीरिजमुद्रितं पुस्तकम् )

यतो वाक्यादपरोक्षज्ञानासंभवाद्वाक्यार्थज्ञानेनाविद्या न निवर्तते अत एव जीवन्मुक्तिरपि दूरोत्सारिता । काचेयं जीवन्मुक्तिः । सशरीरस्यैव मोक्ष इति चेन्माता मे वन्ध्येतिवदसंगतार्थवचनम् । यतः सशरीरत्वं बन्धोऽ-शरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् । अथ सशरीरत्वं प्रति-

मासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययस्तस्य सशरीरत्वनिवृत्तिरिति न। मिथ्येति प्रत्ययेन सशरीरत्वं निवृत्तं चेत्कथं सशरीरस्य मुक्तिः। अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोयं जीवन्मुक्त इति विशेषः। अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते। स जीवन्मुक्त इति चेन्न। ब्रह्मव्यतिरिक्तसकलवस्तुविषयकत्वाद्बाधकज्ञानस्य। कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम्। द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानविषयीभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वाद् द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता। किंच "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" (छां. ६।१४।२) इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति। सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्। बुद्धे क्षेमप्रापणम्। तच्छास्त्रैर्विप्रतिषिद्धम्। बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत। एतेन परं व्याख्यातम् (आ. ध. सू. २।९।२१।—१३-१७) इति। अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः। अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न संभवति।

यद्यपि पूर्वोक्तरीत्या खण्डनं कृत्वा रामानुजाचार्यैरियं जीवन्मुक्तिर्न स्वीक्रियते तथापि तदुक्तदोषनिरासपूर्वकं सर्वैरद्वैतिभिः शुद्धाद्वैतप्रतिपादकैर्वल्लभाचार्यैश्चेयं प्रतिपादिता। श्रीशङ्कराचार्यैरियं तत्र तत्र प्रतिपादिता स्वग्रन्थे परन्तु रामानुजाचार्यात्पूर्वकालीनास्ते न जानीयू रामानुजाचार्यप्रतिपादितदोषानिति शङ्का स्यात्केषांचिद्वादिनां तदर्थं रामानुजाचार्यकालादनन्तरं प्रभवतां विद्यारण्यानां वचोभिस्तत्सिद्धिः प्रदर्श्यते। विद्यारण्यकृतजीवन्मुक्तौ—१ अथ केयं जीवन्मुक्तिः। उच्यते। जीवतः पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति तस्य निवारणं जीवन्मुक्तिः। नन्वयं बन्धः किं साक्षिणो निवार्यते किंवा चित्तात्। नाद्यः। तत्त्वज्ञानेनैव निवारितत्वात्। न द्वितीयः। असंभवात्। यदा तु जलाद् द्रवत्वं निवार्येत, वन्हेर्वौष्ण्यत्वं तदा चित्तात्कर्तृत्वादिनिवारणसंभवः। स्वाभाविकत्वं तु सर्वत्र समानम्। मैवम्। आत्यन्तिकानिवारणासंभवेऽप्यभिभवस्य संभवात्। यथा जलगतं द्रवत्वं मृत्तिकामेलनेनाभिभूयते, वन्हेरौष्ण्यं मणि-

मन्त्रौषधादिना, तथा सर्वाश्चित्तवृत्तयो योगाभ्यासेनाभिभवितुं शक्यन्ते।

२ जीवन्मुक्तौ किं वा प्रमाणम्। उच्यते। श्रुतिस्मृतिवाक्यानि जीवन्मुक्तिसद्भावे प्रमाणानि। तानि च कठवल्ल्यादिषु पठ्यन्ते—'विमुक्तश्च विमुच्यते' इति। जीवन्नेव दृष्टबन्धात्कामादेर्विशेषेण मुक्तः सन् देहपाते भाविबन्धाद् विशेषेण मुच्यते। वेदनात्प्रागपि शमदमादिसंपादनेन कामादिभ्यो मुच्यत एव, तथाप्युत्पन्नानां कामादीनां तत्र प्रयत्नेन निरोधः। अत्र तु धीवृत्त्यभावादनुत्पत्तिरेव ततो विशेषणेत्युच्यते। तथा प्रलये देहपाते सति कंचित्कालं भाविदेहबन्धान्मुच्यते। अत्र त्वात्यन्तिको मोक्ष इत्यभिप्रेत्य विशेषेणेत्युक्तम्। बृहदारण्यके पठ्यते-यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥ इति। श्रुत्यन्तरेपि सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव' इति। एवमन्यत्राप्युदाहार्यम्। स्मृतिषु जीवन्मुक्तस्थितप्रज्ञभगवद्भक्तगुणातीतब्राह्मणातिवर्णाश्रमादिनामभिस्तत्र तत्र व्यवह्रियते। वसिष्ठरामसंवादे-वसिष्ठः—नृणां ज्ञानैकनिष्ठानामात्मज्ञानविचारिणाम्। सा जीवन्मुक्ततोदेति विदेहोन्मुक्ततेव या॥ श्रीरामः—ब्रह्मन् विदेहमुक्तस्य जीवन्मुक्तस्य लक्षणम्। ब्रूहि येन तथैवाहं यते शास्त्रगया दृशा॥ वसिष्ठः—यथास्थितमिदं यस्य व्यवहारवतोऽपि च। अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते॥ इदं प्रतीयमानं गिरिनदीसमुद्रादिकं जगत्प्रतिपत्तुर्देहेन्द्रियव्यवहारेण सह महाप्रलये परमेश्वरेणोपसंहृतं सत्स्वरूपोपमर्देनास्तं गतं भवति। अत्र तु न तथा, किंतु विद्यत एव देहेन्द्रियादिव्यवहारः। गिरिनद्यादिकं चेश्वरेणानुपसंहृतत्वाद्यथापूर्वमवतिष्ठमानं सत्सर्वैरन्यैः प्राणिभिर्विस्पष्टमवलोक्यते। जीवन्मुक्तस्य तत्प्रत्यायकवृत्त्यभावात्सुषुप्ताविव सर्वमस्तं गतं भवति। स्वयं प्रकाशमानं चिद्व्योम केवलमवशिष्यते। बद्धस्य सुषुप्तौ तात्कालिकवृत्त्यभावसाम्येऽपि भाविधीवृत्तिबीजसद्भावान्न जीवन्मुक्तत्वम्। नोदेति नास्तमायाति सुखदुःखैर्मुखप्रभा। यथाप्राप्ते स्थितिर्यस्य स जीवन्मुक्त उच्यते॥ यो जागर्ति सुषुप्तस्थो यस्य जाग्रन्न विद्यते। तस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते॥ रागद्वेषभयादीनामनुरूपं चरन्नपि। योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते॥ यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते। कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते॥ यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः। हर्षामर्षभयान्मुक्तः स जीवन्मुक्त उच्यते॥

शान्तसंसारकलनः कलावानपि निष्कलः । यः सचित्तोपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ यः समस्तार्थजातेषु व्यवहार्यपि शीतलः । परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ एवं विद्यारण्यैर्जीवन्मुक्तेः स्वरूपं प्रमाणं च प्रदर्शितम् । अनेन स्वरूपप्रदर्शनेन रामानुजखण्डनस्य यथायोग्यं निरासः । प्रमाणान्यपि बृहदारण्यकादिश्रुतिमारभ्य योगवासिष्ठपर्यंतं दर्शितानि । वराहोपनिषदि कण्ठरवेण जीवन्मुक्तिरुक्ता तथाहि–यस्मिन्काले स्वमात्मानं योगी जानाति केवलम् । तस्मात्कालात्समारभ्य जीवन्मुक्तो भवेदसौ ॥ ( वरा. २।४२ ) इति । तथा 'नोदेति नास्तमायाति सुखे दुःखे मनःप्रभा । यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ( वरा. ३।२२ ) इत्यादिर्विस्तरस्तत्रैव । आत्मोपनिषदि च–शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः । जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ॥ (आत्मो. २०) इति । जीवन्मुक्तस्य भ्रान्तेर्निवृत्ततया चित्तस्यात्मैकाकारतयाच प्रारब्धभोगे सत्यपि समस्तदुःखनिवृत्तिस्तथा च श्रुतिः–आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ (शाट्या. २२) इति । तथा जीवन्मुक्त्यवस्थायां ज्ञानयोगाभ्यासेनाविद्याकृतावरणस्य सर्वथा निवृत्त्या परिपूर्णब्रह्मानन्दानुभवसुखाविर्भावो भवति । तथाच श्रुतिः–समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥ इति । ततः प्रारब्धक्षये जीवन्मुक्तेन विदेहमुक्तिर्लभ्यते । तच्चोक्तं मुक्तिकोपनिषदि–प्रारब्धक्षयपर्यन्तं जीवन्मुक्ता भवन्ति ते । ततः कालवशादेव प्रारब्धे तु क्षयं गते ॥ वैदेहीं मामकीं मुक्तिं यान्ति नास्त्यत्र संशयः ॥ जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते । विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ (मुक्ति. ७६ ) इति । आत्मोपनिषद्यपि–घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् । तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ ( आत्मो. १।२२ ) इति ॥

## १५ अनिर्वचनीयख्यातिः ।

अद्वैतमते सर्वत्रानिर्वचनीयख्यातिरेव । कार्यस्य सद्रूपेणासद्रूपेण च निर्वक्तुमशक्यत्वात् । यथा रज्जौ भासमानः सर्पः सच न सन् । यदि स सद्रूपः स्यात्तर्हि नायं सर्पः किंतु रज्जुरियमिति ज्ञानेन तद्बाधो न स्यात् । नाप्यसन् । अयं सर्प इति प्रतीत्यनुपपत्तेः । अतोऽनिर्वचनीय उच्यते । यदा

रज्जुरिदंत्वेन ज्ञायते न रज्जुत्वेन तदा तादृशमविद्याकार्यभूतं रज्ज्वज्ञानमिदंतया जायमानज्ञानसहकृतं तिर्यक्त्वादिसमुद्बोधितसर्पसंस्कारसहकृतं सर्पाकारेण परिणमते तद्वदेवेदं सर्वं जगत्। न सत्। यदि सत् स्यात्तर्हि ज्ञानिदृष्ट्या तद्बाधो न स्यात्। 'नेह नानास्ति किंचन' (बृ. ४।४।१९) इत्यादिश्रुतिविरोधश्च। नाप्यसत्। यद्यसत् तर्हि न प्रतीयेत। प्रतीयते तु। अतो निर्वचनीयमेव। तथा चानिर्वचनीयस्य जगतो या ख्यातिः प्रतीतिः सानिर्वचनीयख्यातिरेव।

## १६ विवर्तवादः।

वस्तुनः पूर्वावस्थाया अपरित्यागेन अवस्थान्तरभानं विवर्तः। यथा रज्जौ सर्पभानं शुक्तौ रजतभानं च। रज्जुः स्वावस्थामपरिहायैव सर्परूपेण भासते, शुक्तिर्वा स्वावस्थायाः परित्यागमकृत्वा रजतरूपेण च भासते। तद्वत् ब्रह्म स्वरूपापरित्यागेन जगद्रूपेण भासते। एवं चात्राद्वैतमते विवर्तवादः। परिणामवादस्तु न संभवति। यतः परिणामो नाम वस्तुनः पूर्वावस्थात्यागपुरःसरमवस्थान्तरप्राप्तिः। यथा मृदो घटः। ब्रह्मणोऽविकार्यत्वात्तत्रावस्थान्तरस्यासंभवः।

## १७ प्रश्नमुण्डकयोः संबन्धः।

एते प्रश्नमुण्डकाख्ये उभे अप्युपनिषदावथर्ववेदसंबन्धिन्यौ। तेनैतयोः संबन्धोऽवश्यंभावी। सचायं संबंधः कीदृश इत्यपेक्षायामेवं वक्तुं शक्यते। यत् मुण्डकस्य व्याख्यानरूपा प्रश्नोपनिषदिति। एतत्स्पष्टीकर्तुं मुण्डकमन्त्रः प्रदर्श्यते तदर्थोपबृंहकश्च प्रश्नमन्त्रोऽपि तदग्रे निबध्यते। तथाहि मुण्डकोपनिषदि—३।२।८

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥

प्रश्नोपनिषदि—६—५ स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते॥ एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः॥

इत्यत्र प्रश्नोपनिषन्मन्त्रे पूर्वोक्तस्यैव मुण्डकमन्त्रस्य व्याख्यानं दृष्टान्त-दार्ष्टान्तिकप्रदर्शनपुरःसरं सविस्तरं कृतम् । एवमेव सर्वत्र क्वचिच्छब्दतः क्वचि-त्तात्पर्यतश्च छायालम्बनपुरःसरमत्र प्रश्नोपनिषदि मुण्डकस्य व्याख्यानमिति सुधीभिः प्रतीयेत ।

अथच प्रश्नोपनिषत् मुण्डकोपनिषदर्थोपबृंहिका तदनन्तरं जायमाना चेति श्रीमच्छाङ्करभाष्यनिर्देशादवगम्यते मुण्डकव्याख्यानरूपत्वात्प्रश्नोपनिष-त्तदनन्तरं जायमानेति युक्तिसिद्धमपि । सच भाष्यनिर्देश इत्थम्—(प. ६०)

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।

इत्यादितृतीयमुण्डकप्रथमखण्डपञ्चममन्त्रव्याख्याने (प. ६० ) भाष्यकृ-द्भिरेवमुक्तम्—वक्ष्यति च—न येषु जिह्ममनृतं न माया च ।' प्र. १—१—१—१६ इदमत्रालोच्यम् । मुण्डकोपनिषदि तु पूर्वोक्तं वाक्यं नास्ति किंतु प्रश्नोपनिषदि । तेन भाष्यकृतामयमाशयो यदत्र मुण्डके योऽर्थस्तस्यैवोपबृंहणं प्रश्नोपनिषदा क्रियत इति । तथा तत्रैव वक्ष्यतीति भविष्यदर्थबोधकनिर्दे-शान्मुण्डकान्तरं जायमाना प्रश्नोपनिषदिति ।

## १८ मुण्डककाठकयोः साम्यम् ।

उभे अपि मुण्डककाठकोपनिषदौ ज्ञानप्रतिपादकत्वात्तात्पर्यतः पर-स्परं संवदतः । बहुषु स्थलेषु शब्दसाम्यमपि । क्वचित्तु निखिलमन्त्रसाम्यमपि । तथाहि—

अविद्यायामन्तरे वर्तमानाः । मुं. १ । २ । ९ का. १ । २ । ५
नायमात्मा प्रवचनेन लभ्यः। मुं. ३ । २ । ३ का. १ । २।२२
न तत्र सूर्यो भाति । मुं. २ । २ । १० का. २ । २।१५

काठकापेक्षया मुण्डके विशेषः—मुण्डके यथा यज्ञादीनां विशदतया खण्डनं तथा काठके नास्ति । तत्रेदं कारणं संभवति । यतः काठके नचिकेता उपदेश्यः सच ब्रह्मचारी । पत्नीसाहचर्यसाध्यानि यज्ञादीनि । तेन स नचिके-तास्तत्रानधिकृतत्वान्नैव कुर्याद् यज्ञादीनि ततस्तदपाकरणं नातीवापेक्षितम् । मुण्डके तु महागृहस्थः शौनक उपदेश्यः । सचाधिकारित्वादाहरेद्यज्ञादींस्तत-स्तन्निरासश्चिरन्तनफलप्रदत्वाभावादिप्रतिपादकैः "प्लवा ह्येते अदृढा यज्ञरूपाः" इत्यादिमन्त्रैः कृतः । किंच मुण्डकोपनिषदि सत्यादिनीतितत्त्वानि विशेषतो बोधितानि । काठके च मानसशास्त्ररीत्या विचारः ।

## १९ पाश्चात्यविद्वन्मतविमर्शः।

शार्मण्यपण्डितः 'हर्टेल' महाभागो महता परिकरबन्धेन पाश्चात्यान् म्याक्समुलरडायसन्प्रभृतीन् भारतीयांश्च शङ्कराचार्यादीन् विनिन्दन् तत्तान् विषयान् सविस्तरं वर्णयति स्वीयमुद्रितमुण्डकप्रस्तावनायाम् । इयं च प्रस्तावना शार्मण्यभाषया तेन व्यलेखि । ततस्तत्पांडित्यजिज्ञासुभिः सा मूलत एव पठनीया। अस्माभिः सारसंजिघृक्षूणां विद्यार्थिनां कृते तत्रत्याः प्रधानांशाः प्रदर्श्य यथामति विमृश्यन्ते । तत्र (प्रस्तावनायां) त्रयं विमर्शास्पदं मन्यामहे । तथाहि १ मुण्डकोपनिषदि पुरुषवर्णनं ब्रह्मवर्णनं वा २ मुण्डकोपनिषत्पाठः। ३ जैनमतसाम्यसंभवः।

### १ मुण्डकोपनिषदि पुरुषवर्णनं ब्रह्मवर्णनं वा ?

१ अस्यामादित एवोपलभ्यमानैः कैश्चिन्मन्त्रैरेवं प्रतीयते यत् अस्या मुण्डकोपनिषदोऽथर्ववेदस्य च संबन्धः । किंच यद्यस्माभिराथर्ववेदीयस्कम्भसूक्तस्थाः २९ । ३० । ३१ । ३२ । ३४ मन्त्रा द्वितीयमुण्डकोपनिषदः प्रथमखण्डश्चालोच्यते तर्हि तत्र मुण्डके शब्दशस्तात्पर्यतश्चातीव साम्यं दृश्येत । तथा चैवं प्रत्येतुं शक्येत मुण्डकोपनिषत्स्कम्भसूक्तमूलिकेति । स्कम्भस्य श्रेष्ठत्वमालोच्यैव मुण्डके पुरुषस्य श्रेष्ठत्वं वर्णितम् । किंचोपनिषदन्तरवदत्र न ब्रह्मणः श्रेष्ठत्वमुपवर्णितं किंतु पुरुषस्य तत् । एतदेवास्या उपनिषदो वैलक्षण्यम् । किं चैतद्वैशिष्ट्यमाश्रित्य मुण्डकस्थः पूर्वापरविरोधोऽप्यपाकर्तुं शक्यते । तथाहि--निर्गुणब्रह्मण उपनिषत्प्रतिपाद्यस्य यत्र वर्णनं तत्केनचित्प्रक्षिप्तम् । अथ चापाकृतैतादृशभागोपनिषदेव यथार्थोपनिषत् । विरुद्धः कोऽसावंश इति स्पष्टतया प्रत्याययितुं द्वितीयमुण्डकस्य द्वितीयखण्डोऽखिलस्तथा प्रथममुण्डकप्रथमखण्डनवममन्त्रश्चालम् ।

इति प्रथमप्रघट्टकविषये हर्टेल पण्डितमतम् । तदिदानीं समालोच्यते-पण्डितेनानेनाथर्ववेदस्य मुण्डकस्य च यः संबन्धः प्रदर्श्यते सतु न नवीनः कस्यचित् । यतोऽथर्ववेदगता 'भद्रं कर्णेभिः' इति शान्तिरेव मुण्डकोपनिषदारम्भे समुपलभ्यते । मुक्तिकोपनिषदि च मुण्डकोपनिषदोऽथर्ववेदीयत्वेनैव गणना कृता । केवलं स्कम्भसूक्तेन सहास्याः संबन्धो द्योत्यते तदेव नवीनं किंतु तत्र विद्वन्मनोरमम् । हर्टेलनिर्दिष्टा मन्त्रा अधो निर्दिश्यन्ते । द्वितीयमुण्डकप्रथमखण्डस्तु मूले लभ्येत जिज्ञासुभिः—

अथर्ववेददशमकाण्डे अ. ४ सू. ४-
स्कम्भे लोकाः स्कम्भे तपः स्कम्भेध्यृतमाहितम् ।
स्कम्भ त्वा वेद प्रत्यक्षमिन्द्रे सर्वं समाहितम् ॥ २९ ॥
इन्द्रे लोका इन्द्रे तप इन्द्रेध्यृतमाहितम् ।
इन्द्रं त्वा वेद प्रत्यक्षं स्कम्भे सर्वं प्रतिष्ठितम् ॥ ३० ॥
नाम नाम्ना जोहवीति पुरा सूर्यात्पुरोषसः ।
यदजः प्रथमं संबभूव स ह तत्स्वराज्यमियाय यस्मान्नान्यत्
परमस्ति भूतम् ॥ ३१ ॥
यस्य भूमिः प्रथमान्तरिक्षमुतोदरम् ।
दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३२ ॥
यस्य वातः प्राणापानौ चक्षुरङ्गिरसोभवन् ।
दिशो यश्चक्रे प्रज्ञानी तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३४ ॥

पं. हर्टेलवन्नास्माभिर्दृश्यते साम्यं तद्विषये सुधीभिर्विभावनीयम्। केवलं प्रातीतिकं साम्यं यत्र कुत्रापि ज्ञातुं शक्यत । तेन न कार्यसिद्धिः । यत्र सूक्ते यत्प्रशंसा स देवः श्रेष्ठ इति सर्वत्रैवानुभूयते वरुणेन्द्रादिसूक्तेषु । अत्र च स्कम्भप्रशंसेति तच्छ्रेष्ठत्वं वर्ण्यते तद्युक्तमेव । परमत्र निर्गुण-ब्रह्मापेक्षयापि स्कम्भस्य श्रेष्ठता वर्णितेति यत् 'हर्टेल' मतं तत्प्रामादिकम् । तस्यास्य भ्रमस्य कारणमस्मन्मतेनैवं प्रतीयते । अत्र स्कम्भसूक्ते प्रथमत एव भाष्यकृतावतरणिकायामेवं निर्देशः कृतः । तथाहि--'कस्मिन्नङ्गे' इति स्कम्भसूक्तम् । स्कम्भ इति सनातनतमो देवो ब्रह्मणोप्याद्यभूतः । अतो ज्येष्ठं ब्रह्मेति तस्य संज्ञा ।' अत्र ब्रह्मणोप्यादिभूत इत्युक्त्या हर्टेलमहाभागेनात्रत्यं ब्रह्म वेदांतप्रतिपाद्यं निर्गुणं गृहीतं स्यात् । परमत्र न 'ब्रह्म' इति नपुंसकलिङ्गपदं 'किन्तु 'ब्रह्मा' इति पुंल्लिङ्गघटितम् । ब्रह्मण इति षष्ठी तूभयत्र समाना । ततश्चात्र पुंल्लिङ्गविशिष्टब्रह्मपदेन प्रजापतिर्ग्राह्यः । यश्च स्कम्भसूक्त उक्तः । अथर्ववेदे दशमकाण्डे सप्तमे सूक्ते ।

यस्मिन् स्तब्ध्वा प्रजापतिर्लोकान् सर्वा अधारयत् ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ ७ ॥

अस्यामृचौ प्रजापतिः स्कम्भाश्रयमालम्ब्य लोकान्निर्मिमीत इत्युक्तम् । तेन प्रजापतेराश्रयभूतः स्कम्भः प्रजापत्यपेक्षया श्रेष्ठो नतु निर्गुणब्रह्मा-

पेक्षया । प्रक्षेपविषयिणी हर्टेलोक्तिरग्रिमप्रघट्टके सविस्तरं निरस्यते । वेदान्त-प्रतिपाद्यमक्षरं ब्रह्म पुरुषापेक्षया निकृष्टमिति यदुक्तं तद्विचारयामः । तदु-पोद्बलकश्च मन्त्रः प्रथममुण्डकप्रथमखण्डे नवमस्तेन निर्दिश्यते । सचेत्थम् —यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ अस्य मन्त्रस्य प्रकरणादिसंवलितोर्थ इत्थम्—ब्रह्मणो निर्गुणादभिन्नो यः सामान्यविशेषवित्पुरुषस्तस्माद् ब्रह्म हिरण्यगर्भापरपर्यायं नाम रूपमन्नं च जायते । एवंचात्र मन्त्रे ब्रह्मपदेन हिरण्यगर्भार्थो ग्राह्यः । अयमेवार्थो मीमांसापरिपूतत्वाच्छङ्कराचार्यैरादृतः । यत इदं ब्रह्म नामरूपान्नादिविकृत-वस्तुसाहचर्यघटितं यस्य च जायत इत्यनेन बोधिता जन्माख्या विकृतिरस्ति । ततो निकृष्टं हिरण्यगर्भाख्यमेवैतद्ब्रह्म नतु निर्गुणं तेन तन्मूलको निर्गुण-ब्रह्मणो निकृष्टत्वबोधकः सिद्धान्तो गगनकुसुमायते । हिरण्यगर्भस्य च प्रथ-मत उत्पत्तिः प्रथिततमेन 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इत्यादिमन्त्रेण प्रतिपाद्यमाना सर्वविदितैव । एवं 'हर्टेल' महाभा-गद्योतितहेतूनामाभासत्वं प्रदर्श्य स्वमतेन उपनिषदन्तरवदस्यामप्युपनिषदि निर्गुणब्रह्मण एव प्रतिपादनं नतु तस्य कयापि विधया निकृष्टत्वं ब्रह्मपुरुषश-ब्दौ समानार्थकाविति च वर्ण्यते । वैदिकप्रकरणार्थनिर्णये मीमांसाशास्त्रे उप-क्रमोपसंहारादीनि षड्विधलिङ्गान्युररीक्रियन्ते । तथाच —

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

अत्रोपनिषदि षड्विधलिङ्गैर्ब्रह्म मुख्यतया प्रतिपाद्यत इति ज्ञापयितुं शक्यते । तत्रोपक्रमोपसंहारौ प्रदर्श्येते । तेनैवान्यलिङ्गप्रतीतिः सुकरा । तथाहि-—मुं. १।१।३ अत्र शौनकेनाङ्गिरसं विधिवदुपसद्य पृष्टं—कस्मिन्नु भगवो विज्ञा-ते सर्वमिदं विज्ञातं भवतीति । तदुत्तरार्थं परापरेति विद्याविभागं कृत्वा—अथ परा यया तदक्षरमधिगम्यते' इत्युक्त्वा—यत्तदद्रेश्यमग्राह्यमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं भूतयोनिं परिपश्यन्ति धीराः ॥ इति वेदान्तप्रतिपाद्यस्य निर्गुणब्रह्मणो नपुंसकलिङ्गघटितस्य निर्दे-शः कृतः । अयमुपक्रमः। अन्तेच मुं. ३—२—१० तदेतदृचाभ्युक्तम् । क्रि-यावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ इत्युपसंहारः। एवं त्रोपक्रमो-

मोपसंहारयोरेकरूपमेव निर्गुणं ब्रह्म प्रतिपादितम् । अस्मिन्नुपसंहारमन्त्रे 'ब्रह्मविद्यां वदेत' इति ब्रह्मविद्यापदस्योक्तिः । तथा चात्र निर्गुण-ब्रह्मज्ञानमेव द्योत्यते । नान्यज्ज्ञानम् । तथैव मध्येऽपि मुं. ३-२-१ स वेदै-तत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ अत्र ब्रह्मण एव वर्णनम् । किंच ब्रह्मपुरुषौ पर्यायभूताविरयप्यनेन वाक्येन द्योत्यते । पूर्वार्धोक्तब्रह्मण एवोत्तरा-र्धगतपुरुषपदेन प्रत्यभिज्ञानम् । एवमेव मुं. १।२।१० पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोविद्याग्रन्थिं विकिरतीह सोम्य ॥ अत्रापि पूर्ववद्ब्रह्मपुरुषयोरभेदो निर्गुणब्रह्मणश्च वर्णनमिति प्रती-यते । अनया परिपाट्यान्येपि प्रभूता निर्देशाः स्वयं सुधीभिराकलयितुं शक्यन्ते । अस्माभिरुपरि प्रदर्शिता मन्त्राः प्रक्षिप्तताग्रहग्रहिलेनापि हर्टेल-महाभागेनाप्रक्षिप्ततयैव येऽङ्गीकृतास्तादृशा एव गृहीताः ।

## २ मुण्डकोपनिषत्पाठः ।

अस्यामुपनिषदि हर्टेलमहाभागमतेन ये प्रक्षिप्ता मन्त्रास्तन्निर्देशः । पदप्रक्षेपनिर्देशोऽपि तेन बहुशः सूचितः । स चात्र न गृहीतो विस्तरभिया । केवलं मन्त्रप्रकरणनिर्देश एव कृतः ।

१ प्रथममुण्डके प्रथमखण्डे १।२ मन्त्रौ ।

२ प्रथममुण्डके द्वितीयखण्डे १।२।१३ मन्त्राः ।

३ द्वितीयमुण्डके द्वितीयखण्डः सर्वः प्रक्षिप्तः ।

४ तृतीयमुण्डके प्रथमखण्डे चतुर्थमन्त्रप्रभृति संपूर्णः खण्डः ।

५ तृतीयमुण्डके द्वितीयखण्डे तृतीयनवमौ मन्त्रौ ।

अन्यच्च 'गुहाचरम्' इत्यत्र 'गुहाजरम्' इत्यादयः पाठाः सूचिताः । अत्रेदमस्मन्मतं ध्येयम् । शुद्धप्राचीनपुस्तकेषूपलभ्यमाना युक्तियुक्तास्तेते पाठा अवश्यं समादरणीयाः। किन्तु 'हर्टेल' महाभागस्य विद्वद्भिरननुभूतपूर्वान्या दृश्यैव परिपाटी । यतः स कुत्रापि पुस्तकेऽनुपलभ्यमानानपि पाठानादरणीय-त्वेन निर्बन्धयति । प्रदर्शयति च कारणद्वयम् । १ अत्रोपनिषदि ब्रह्म पुरु-षापेक्षया निकृष्टं प्रतिपाद्यत इति ब्रह्मवर्णनपराः सर्वेऽशाः प्रक्षिप्ताः इति । २ छन्दोविमतिर्यत्र तत्सर्वं विचारयित्वा प्रक्षिप्ततां वा नेयमिति । तत्र १ ब्रह्म-

निकृष्टत्वविषयको भ्रमस्त्वस्माभिः प्रथमप्रघट्टके यथायथं प्रदर्श्य खण्डित एव। तेन प्रथमकारणेन प्रक्षिप्तताप्रदर्शनं युक्तिविधुरम्। २ मुण्डकोपनिषद् ब्राह्मणभागस्था। तत्र च गद्यांशाः प्रभूता भवन्ति। कतिचनैव पद्यमयांशाः। कतिचन पद्यमया इव भासमानाः सर्वैश्छन्दोलक्षणैरलक्षिताश्चोपलभ्यन्ते। सर्वत्र ब्राह्मणोपनिषत्सु त्रिविधेयं पद्धतिरनुभूयते। तेन छन्दोवदाभासमानानां मन्त्राणां विपरिवर्त्य निर्माणं निर्मातुरसांप्रादायिकतां प्रदर्शयति। किंच छन्दःसंवादार्थं हर्टेल महाभागैर्नवीनपदकल्पनं क्रियते तत्तु नितान्तं युक्तिविधुरम्।

### ३ जैनादिमतसाम्यम्।

उपनिषदोऽस्याः प्रतिपाद्यं जैनमतेन सह संवदति कुत्रचिद्बौद्धमतेनेति प्रदर्शयितुं मुख्यतया षट् साम्यस्थलानि 'हर्टेल' महाभागेन प्रदर्शितानि तानि यथाक्रमं विचारयामः।

१ 'मुण्डक' इति नाम्ना, ३।२।१० इति मन्त्रे शिरोव्रतनिर्देशाच्च म्याक्स्मुलरपण्डितप्रभृतिभिरेवं तर्कितं यत्र संप्रदाये मुण्डितमुण्डत्वं तेन जैनादिसंप्रदायेनास्य संवाद इति। तर्कश्चायं हर्टेलमहाभागस्यापि संमतः।

२ मुण्डके 'मुक्तेः पूर्वं ब्रह्मलोकाख्ये स्थाने किंचित्कालं जीवेन स्थेयम्' इति निर्दिश्यते। एवमेव जैनैरपि संमन्यते।

३ 'प्लवा ह्येते अदृढा यज्ञरूपाः' इत्यादिनात्रोपनिषदि यज्ञा निन्द्यन्ते तच्च यज्ञद्वेषिणा जैनमतेन सह संवदति।

४ द्वितीयमुण्डके प्रथमखण्डे ४–१० मन्त्रेषु विश्वं पुरुषस्यावयवभूतं द्योत्यते तदपि जैनमतेन सह संवदति।

५ जैनैर्बौद्धैश्च सप्त लोका उररीक्रियन्ते त एव किंचिद्भेदेनात्रोपनिषदि वर्णिताः।

६ कर्म, च्यु, राग, वीतराग, सम्यग्ज्ञान, ग्रन्थि, इत्यादयः जैनमतगृह्यमाणाः शब्दा अत्रापि दृश्यन्ते तेन तन्मतसाम्यम्।

१ अथर्ववेदाध्यायिभिः शिरोव्रतमाचरणीयं तच्च शिरोव्रतं शिरस्यग्निधारणात्मकम्। अयं चाग्निरेकर्षिसंज्ञकः। अस्याग्नेर्निर्देशः स्कम्भसूक्तेऽत्रोपनिषदि चास्ति। मुण्डकपदेन शिरो बोध्यते। एवंच 'एकर्षिनामकाग्नेः शिरसि धारणं यत्र व्रते तादृशं व्रतं संपाद्य मुण्डकोपनिषदथर्ववेदीयेन

आह्वाध्याप्या चेति यत्र प्रोच्यते सा मुण्डकव्रतप्रतिपादकत्वान्मुण्डकोपनिषद्विति ग्रथार्थनाम्ना प्रतिपाद्यते । तथाच मुं. ३।२।१० क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ अयमथर्ववेदाध्ययनाध्यापनसंप्रदायो विदेशीयानामपरिचितस्तेनैव तथा म्याक्समुलरप्रभृतीनां पण्डितानामनुमानमित्युत्प्रेक्षामः ।

२ विषये ब्रह्मलोको हिरण्यगर्भलोकः सचात्रोपनिषदि क्रममुक्तिभाजां कृते वर्णितो न जीवन्मुक्तिभाजां विदेहमुक्तिभाजां वा कृते । ये चोत्तरमार्गेण गच्छन्ति ते हिरण्यगर्भेण स्वाधिकारसमाप्तौ ज्ञानेनानुगृह्यन्ते । ततस्ते मुक्ता भवन्ति । उक्तं चैतत्–परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्यादिना । सच हिरण्यगर्भलोको निर्गुणब्रह्मणो न्यून एवेति सुविदितं श्रुतिविदाम् । न तत्र जैनमतसंसर्गप्रत्याशा ।

३ विषये–प्लवा ह्येते अदृढा यज्ञरूपा इत्यनेन या यज्ञनिन्दा सा न जैनमतसंवादिनी यतो मुण्डकोपनिषत् ज्ञानमार्गप्रतिपादिनी । सर्वासां ज्ञानमार्गप्रतिपादिनीनामुपनिषदामियं परिपाटी यत्तत्र कर्ममार्गो निन्द्यते तद्वदत्रापि । तेन कारणमन्तर्जैनमतसंवादस्येति कथनं न युज्यते ।

४–५–६–विषयेषु–वैदिकमतस्थांस्तांस्तान् शोभनाभ्युपगमान् दृष्ट्वा जैनैरपि तत्संवादार्थं तथा विश्वपुरुषावयवत्वकल्पनादि कृतमित्यपि संभवति । विनिगमनाविरहात् । यत्र वैदिकग्रन्थान्तरवत् निर्गुणब्रह्मादिवर्णनं तत्र जैनमताद्वैदिकानभिमतं किंचिद्गृहीतं स्यादिति शङ्कापि नोपजायते विवेचकानाम् । किंच 'जैनैरपि मुण्डकोपनिषदो वीतरागादयः शब्दा गृहीताः स्युः' इत्यपि संभाव्यते इति ब्रुवन् हर्टेलमहाभागोऽप्यस्मदुक्तमभिमन्यते ।

## २० बालबोधिनी ।

केनादिबालबोधिनीवेयमपि छात्राणामुपकाराय भवेदिति बुध्यात्र प्रवृत्तिः । तथाच प्रस्तावनापि तत्तद्विषयाणां विवेचिका विस्तृततया प्रणीता । तत्र केषांचिन्महाभागानामतीव साहाय्यमभूत्तदर्थं तेषामनुग्रहभरान् शिरसि कुर्मः । पूर्वोक्तमहाभागेषु सुगृहीतनामधेयानां '**डॉ. बेलवलकर एम्. ए, पी. एच्. डी**' इत्येतेषां नाम प्रथमं निर्देशमर्हति । यत एभिरनर्घ्यकालव्ययं सोढ्वानूदितमस्मत्कृते शार्मण्यभाषामयं हर्टेल पण्डितमतम् । यद्वता विचारा-

र्हाशा अस्माभिः पूर्वं विमृष्टास्तथा प्रो. दांडेकरमहाभागा अपि प्रशंसाभाजनम् । अत्र यथामति विचारिताः केचनांशास्तैश्छात्रा यद्यल्पेनाप्यंशेन कृतकार्या भवेयुस्तर्हि कृतकृत्यतां नेष्यामो वयमात्मानम् । प्रार्थयामश्च विद्वद्वरान् यत्तैः प्रमादादिज्ञापनेनानुग्राह्यामिति विज्ञापयति सप्रश्रयम्—

पुण्यपत्तनम्
आश्विन कृ. १३ गुरौ १८४७

विद्वद्वशंवदः पाठकोपाव्हः
श्रीधरशर्मा ।

# मुण्डकोपनिषत् ।

ॐ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ब्रह्मा देवानामित्याद्याथर्वणोपनिषत् । अस्याश्च विद्यासंप्रदाय-

---

श्रीः

ॐ भूधरभूजानिर्विजयते ।

प्रणम्य शंकराचार्यान् वेदान्तार्थप्रकाशकान् । मुण्डके बालबोधार्थं क्रियते बालबोधिनी ॥

शान्त्यर्थः—हे देवाः, वयं कर्णेभिः कर्णैः, भद्रं कल्याणमनुकूलं शृणुयाम । हे यजत्राः, यजन्तं त्रायन्ते रक्षन्तीति यजत्रा यजमानपालकाः, अक्षभिर्नेत्रैः भद्रं कल्याणं पश्येम । किंच वयं स्थिरैर्दृढैरंगैः करचरणाद्यवयवैः । तथा तनूभिः शरीरैर्भार्यापुत्रादिकैर्वा युताः तुष्टुवांसो भवतः स्तुवन्तः सन्तो देवहितं देवैः स्थापितं देवानां हितं देवोपासनयोग्यं वा यदायुर्जीवनं तद्व्यशेमहि व्यश्नवमिहि प्राप्नुयाम ॥ ॐ शान्तिः शान्तिः शान्तिरिति त्रिर्वचनमाध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमार्थम् । अथ च प्रश्नमुण्डमाण्डूक्याथर्वशिरोथर्वशिखादय एकत्रिंशदुपनिषदोऽथर्वणवेदगताः परम् आद्यत्रयेतरासां तद्गताधिकारणाभावेन शारीरकेनुपयोगित्वात् तिस्र एव तत्रोपयोगित्वाद्भगवान् भाष्यकारो व्याचख्यौ । तत्र च प्रकृतोपनिषद्–अदृश्यत्वादिगुणको धर्मोक्तेः (ब्र.सू.१-२-२१) इति सूत्रधृताधिकरणोपयोगित्वाद्व्याचिख्यासितेति तदारम्भप्रतीकमुच्चारयति भाष्यकारः । **ब्रह्मा देवानामित्याद्याथर्वणोपनिषदिति** । अस्मिन् वाक्ये व्याचिख्यासितेति शेषः पूरयितव्यः । व्याख्यातुमिष्टेत्यर्थः । अग्रे–अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचांगिरे ब्रह्मविद्याम् । स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोंऽगिरसे परावराम् ॥ २ ॥ शौनको ह वै महाशालोंऽगिरसं विधिवदुपसन्नः पप्रच्छ ॥ इति प्रथममुण्डके प्रथमखंडे द्वितीयतृतीयौ मन्त्रौ ताभ्यां पुरुषनिर्मितेयं विद्येति प्रतीयते तथाच तत्प्रतिपादिकाया अस्या मुण्डकोपनिषदः पौरुषेयत्वे पुरुषनिष्ठभ्रमप्रमादादिदोषघटितत्वादप्रामाण्यप्रसंगेन व्याचिख्यासितत्वमसंगतमित्याशंकां निराकर्तुमाह–**अस्याश्चेति** । विद्यायाः पाठनमेव ब्रह्मादिभिः क्रियेत नतु ते तां विद्यां स्वयं निर्मान्ति तेन पुरुषकर्तृकत्वाभावेन पूर्वोक्तभ्रमादिदोषासंभवस्तथा च प्रामाण्याविघाताद्व्याचिख्यासितत्वे न क्षतिः । **विद्यासंप्रदायकर्तृपारम्पर्यलक्षणसंबन्धमिति** । विद्याया मुण्डकोक्तविद्यायाः संप्रदायः प्रवचनं तत्कर्तृणां ब्रह्माथर्वांगिरोभारद्वा-

कर्तृपारम्पर्यलक्षणसंबन्धमादावेवाह स्वयमेव स्तुत्यर्थम् । एवंहि महद्भिः परमपुरुषार्थसाधनत्वेन गुरुणायासेन लब्धा विद्येति श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति । स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्तेरन्निति । प्रयोजनेन तु विद्यायाः साध्यसाधनलक्षणसंबन्धमुत्तरत्र वक्ष्यति–" भिद्यते हृदयग्रन्थिः " ( मु. २–२–८ ) इत्यादिना । अत्र

---

आदिरूपं पारम्पर्यं तद्रूपः संबन्धः । ननु परम्परा चान्येन प्रतिपादनीया न स्वयमिति शंकां निराकरोति–**स्तुत्यर्थमिति** । तथाच स्तुतौ तात्पर्यात्स्वयं प्रतिपादने न कापि क्षतिः । एवं महापुरुषसंप्रदायागतेयं ब्रह्मविद्या महाफला तत्र प्रवृत्तिः कर्तव्येति विद्यास्तुतिः । तदेवोक्तं—**महद्भिरित्यादिना** । **परमपुरुषार्थसाधनत्वेनेति** । धर्मार्थकामात्रयः साधारणपुरुषार्थाः । मोक्ष एव परमपुरुषार्थः । स्तुतेः प्रयोजनमाह–**श्रोतृबुद्धिप्ररोचनार्थेति** । महीकरोति गुरूकरोतीत्यर्थः । प्ररोचनं प्रवृत्तिजनकमिति द्योतयति–**स्तुत्येत्यादिना** । सर्वत्र ग्रन्थेषु तत्तद्ग्रन्थाध्ययनप्रवृत्तिजनकमनुबन्धचतुष्टयं भवति । तथाचात्राप्युपनिषदि तदपेक्ष्यते । इयं च मुण्डकोपनिषद्ब्रह्मविद्याप्रतिपादिका । तेन ब्रह्मविद्याया यत्प्रयोजनाद्यनुबन्धचतुष्टयं तदुपनिषदोऽपि भविष्यतीत्यभिप्रेत्य ब्रह्मविद्यायाः प्रयोजनसबन्धमाह । **प्रयोजनेनेति** । विषयः, संबन्धः, प्रयोजनम्, अधिकारी–इति चतुष्टयमत्रेत्थम् । विषयो ब्रह्म । प्रयोजनं मुक्तिः। प्रयोजनेन विद्यायाः साध्यसाधनलक्षणः संबन्धः । साधनचतुष्टयसंपन्नोऽधिकारी । साधनचतुष्टयं चेत्थम्–१ इहामुत्रार्थफलभोगविरागः २ नित्यानित्यवस्तुविवेकः ३ शमदमादिसाधनसम्पत् ४ मुमुक्षुत्वं चेति । १ नित्यं वस्तु ब्रह्म, अनित्यं तदितरज्जगदादि वस्तु । तद्विवेकः पृथक्तया ज्ञानम् । २ इहार्थः जायासुतादिः । अमुत्रार्थः स्वर्गसुखादिः तदुपभोगे विराग औदासीन्यम् । ३ शमदमादीत्यत्रादिपदेन उपरतितितिक्षासमाधानश्रद्धानां चतुर्णां ग्रहणम् । एवं च षट् । क्रमेणार्थः–१ लौकिकव्यापारान्मनस उपरमः शमः । २ बाह्यकरणानामुपरमो दमः । ३ ज्ञानार्थं विहितनित्यादिकर्मसंन्यास उपरतिः । ४ शीतोष्णादिद्वन्द्वसहनं तितिक्षा । ५ निद्रालस्यप्रमादत्यागेन मनःस्थितिः समाधानम् । ६ सर्वत्रास्तिकता श्रद्धा । ४ मुमुक्षुत्वं–मोक्षेच्छावत्वम् । **साध्यसाधनेत्यादि** । विद्या ब्रह्मज्ञानं साधनं साध्यं च हृदयग्रन्थिभेदसंशयच्छेदकर्मक्षयाः। एतद्रूपः संबन्धो विद्याप्रयोजनयोः। **अत्रचेत्यादि** । अपरशब्दवाच्यायामिति सप्तम्यन्तपाठापेक्षयायं षष्ठ्यन्त पाठः साधीयान् । स्वयमेवोक्तवेत्यस्य ब्रह्मविद्यामाहेत्यनेन संबन्धः ।'अहरहः सन्ध्यामुपासीत' इति विधिः । 'ब्राम्हणो न हन्तव्यः ' इति प्रतिषेधः। एताविव केवलं विधिप्रतिषेधावपरशब्दाभिधेयायामृग्वेदादिविद्यायामुक्तौ तेन च कर्मात्मिकेयमृग्वेदादिविद्या सा चाविद्यायाः संसारकारणभूताया निवर्तिका न भवति विरोधाभावात् । यद्विरोधि तदपरस्य विरोधिनो निवर्तकं यथा तेजस्तमसो निवर्तकमिति लौकिको नियमः । संसारकारणभूताविद्या तु न कर्मणा विनाश्यमिति

चापरशब्दवाच्यया ऋग्वेदादिलक्षणायाः विधिप्रतिषेधमात्रपराया विद्यायाः संसारकारणाविद्यादिदोषनिवर्तकत्वं नास्तीति स्वयमेवोक्त्वा परापरेति विद्याभेदकरणपूर्वकम् "अविद्यायामन्तरे वर्तमानाः"(मुं.१-२-८) इत्यादिना। तथा परप्राप्तिसाधनं सर्वसाधनसाध्यविषयवैराग्यपूर्वकं गुरुप्रसादलभ्यां ब्रह्मविद्यामाह-"परीक्ष्य लोकान्" (मुं. १-२-१२) इत्यादिना। प्रयोजनं चासकृद्ब्रवीति "ब्रह्म वेद ब्रह्मैव भवति"(मुं.३-२-९) इति "परामृताः परिमुच्यन्ति सर्वे"(मुं. ३-२-६) इति च। ज्ञानमात्रे यद्यपि सर्वाश्रमिणामधिकारस्तथापि संन्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्मसहितेति "भैक्ष्यचर्यां चरन्तः"(मुं.१-२-११) "संन्यासयोगात्"(मुं.३-२-६)इति च श्रुवन्दर्शयति। विद्याकर्मविरोधाच्च। न हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म स्वप्नेऽपि संपादयितुं शक्यम्। विद्यायाः कालविशे-

---

यतः कर्माविद्यायाः सकाशादुत्पद्यते तेन विरोधो नास्ति प्रत्युतोपजीव्योपजीवकभावः, यदि कर्माविद्याया विनाशकं स्यात्तर्ह्युपजीव्यविरोधः स्यात्स चासंगतः। अत्र मुण्डकोपनिषदि परापरेति विद्याभेदः प्रथममुक्तः। ततोऽविद्यायामन्तरे वर्तमाना इत्यनेन ऋग्वेदादिविद्या संसारकारणभूताविद्यानिवर्तिका नास्त्यतः कर्मनिन्दापूर्वकं सर्वेषु यज्ञादिसाधनेषु स्वर्गादिसाध्येषु च वैराग्यमालम्बनीयत्वेनोक्तं ततो गुरुप्रसादेनैव केवलेन प्राप्यां परब्रह्मप्राप्तिसाधनभूतां ब्रह्मविद्यां कथितवानित्यभिप्रायः। **प्रयोजनं चेति।** अपरविद्यायां यथा सुखदुःखप्राप्तिपरिहारयोः प्रवृत्तिनिवृत्ती प्रयोजनं तथात्र परविद्यायां प्रवृत्तिनिवृत्त्यात्मकं प्रयोजनं न किन्तु ज्ञानमात्रं मोक्षफलदं यथा सर्पनिवृत्तौ रज्जुज्ञानं यथा वा विस्मृतकण्ठमणिलाभे तत्स्मरणं तथा ब्रह्मज्ञानमेव ब्रह्मप्राप्तौ साधनमिति भावः। **असकृत्**-वारंवारम्। परामृताः-जीवन्त एव। **ज्ञानमात्र इति।** ब्रह्मचारिगृहस्थवानप्रस्थसंन्यासिन इति चत्वार आश्रमिणः। तत्र ब्रह्मचारिगृहस्थवानप्रस्थानां कर्म नियतम्। संन्यासिषु भेदद्वयम्। केचनाज्ञाः केचन प्रज्ञाः। येऽज्ञास्तैस्त्रिसंध्यस्नानादिविधयोऽवश्यमनुष्ठेयाः। प्रज्ञैः संन्यासिभिर्लोकसंग्रहार्थं शौचाचमनादयो विधयोऽनुष्ठेयाः। वस्तुतस्तु तेषामाश्रमधर्मो ज्ञानोपबृंहकशमदमादिसाधननिष्ठत्वमेव। तैरेव प्रज्ञैः संन्यासिभिर्ब्रह्मविद्या कर्मसाहित्याभावात् लभ्यते नान्यैरज्ञसंन्यासिभिर्ब्रह्मचार्यादिभिस्त्रिभिश्च। भैक्ष्यचर्या-संन्यासः। **दर्शयतीति।** मुण्डकश्रुतिरिति कर्तृपदम्। **विद्याकर्मविरोधाच्चेति।** तमस्तेजसोरिव स्थितिगत्योरिव च विरोधः। ज्ञानसमये अकर्तृब्रह्माहमस्मीति बोधः। कर्मसमये करोमीति प्रतीतिस्तेन ज्ञानकर्मणोः साहित्यं न संभवतीत्याह-**नहीति। ब्रह्मात्मैकत्वदर्शनेनेति।** ब्रह्मणो जीवात्मना सहैकत्वमिति दर्शनं ज्ञानं तेन। यदा ब्रह्मनिष्ठो ज्ञानाद्व्युत्थितो भवति तदा कर्म कुर्यादिति कालभेदाज्ज्ञानं कर्म चोभयं संभवेदित्यत आह-**विद्याया इति।** उदिते जुहोतीति कर्मणि यथा कालनियमस्तथा ज्ञाने

भाभावादनियतनिमित्तत्वाच्च कालसंकोचानुपपत्तेः । यत्तु गृहस्थेषु ब्रह्मविद्या-संप्रदायकर्तृत्वादि लिङ्गं न तत्स्थितं न्यायं बाधितुमुत्सहते । नहि विधिशतेनापि तमःप्रकाशयोरेकत्वसद्भावः शक्यते कर्तुम्, किमुत लिङ्गैः केवलैरिति। एवमुक्तसंबन्धप्रयोजनाया उपनिषदोऽल्पग्रन्थं विवरणमारभ्यते । य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तः, तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति, परं वा ब्रह्म गमयति, अविद्यादिसंसारकारणं वात्यन्तमवसादयति विनाशयतीत्युपनिषत् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात् ।

ॐ ब्रह्मा देवानां प्रथमः संबभूव
विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा-
मथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

---

कालो न नियतः । तथा निमित्तान्तरं च न नियतं तेन पूर्वोक्तकालसंकोचो नोपपद्यते । तदेवोक्तं—**कालसंकोचानुपपत्तेरिति** । अंगिरःप्रभृतिभिर्गृहस्थैर्ब्रह्मविद्योपदिष्टा तेन ते ब्रह्मज्ञानिन आसन्निति तु सुस्पष्टं ततश्च प्रत्यवायभिया तैर्गृहस्थाश्रमकर्मानुष्ठितमेव स्यात् । ततश्च ज्ञानकर्मणोः समुच्चयः सिद्ध इति शंकां निवर्तयति–**यत्त्विति** । गृहस्थेषु–अंगिरःप्रभृतिषु । **लिङ्गमिति** । लिंगमपि कुत्रचित्तात्पर्यनिर्णायकं भवतीति भावः । **स्थितं न्यायमिति** ।विद्याकर्मविरोधरूपं श्रौतं न्यायामित्यर्थः । तथाच 'श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् (जै. सू. ३–३–१४) इति जैमिनीयसूत्रानुसारं यत्र श्रुतिर्नास्ति तत्र लिंगस्य निर्णायकत्वमत्र तु 'भैक्षचर्यां चरन्तः' 'संन्यासयोगात्' इति श्रुतिसत्त्वेन तस्या एव प्राबल्यं न लिंगस्य श्रुत्यपेक्षया तस्य दौर्बल्यादिति भावः । किंचांगिरःप्रभृतीनां गार्हस्थ्यमाभासमात्रम् । 'यस्य मे चास्ति सर्वत्र यस्य मे नास्ति किंचन । मिथिलायां प्रदीप्तायां न मे किंचन दह्यते ॥ इति तादृशगृहस्थवचनदर्शनात् । एवंच गार्हस्थ्याभासे न कर्मसत्ता किंतु कर्माभासता । ततश्च कर्माभासेन ज्ञानस्य समुच्चयेऽपि न क्षतिः । कर्माभासस्य विध्यभावात् । अथ च विधिरप्यकिंचित्कर इत्याह–**नहीति** । **केवलैरिति** विधिरहितैर्दृष्टान्तलिंगैरित्यर्थः । **अल्पग्रन्थमिति** । अल्पो ग्रन्थः शब्दसमुदायो यस्मिन् । **य इमामिति** । उपनिषदित्यत्र 'षद्लृ विशरणगत्यवसादनेषु' इति धातुः । विशरणं तनूकरणं, गतिर्गमनं, अवसादनं नाशनम्, इत्यर्थत्रयं क्रमेण बोधयति । आत्मभावेन–प्रेमस्थानत्वेन । उपयन्ति–प्राप्नुवन्ति । अनर्थपूगः–अनर्थसमुदायः । निशातयति–तनूकरोति । **गमयतीति** । तानिति शेषः । संसारकारणमविद्यादि । अत्रादिपदेना-विद्याजन्यधर्माधर्मौ गृह्येते । **सदेरिति** 'इक्श्तिपौ धातुनिर्देशे' इत्यनेनेका निर्देशः । **अर्थस्मरणादिति** । पाणिनिना धातुपाठे 'षद्लृ विशरणगत्यवसादनेषु' इति पूर्वोक्तार्थत्रयं

ब्रह्मा परिवृढो महान्धर्मज्ञानवैराग्यैश्वर्यैः सर्वानन्यानतिशेत इति। देवानां द्योतनवतामिन्द्रादीनां प्रथमो गुणैः प्रधानः सन्प्रथमोऽग्रे वा संबभूवाभिव्यक्तः सम्यक्स्वातन्त्र्येणेत्यभिप्रायः। न तथा यथा धर्माधर्मवशात्संसारिणोऽन्ये जायन्ते। "योऽसावतीन्द्रियोऽग्राह्यः" (म. स्मृ. १–७) इत्यादिस्मृतेः। विश्वस्य सर्वस्य जगतः कर्तोत्पादयिता। भुवनस्योत्पन्नस्य गोप्ता पालयितेति विशेषणं ब्रह्मणो विद्यास्तुतये। स एवं प्रख्यातमहत्त्वो ब्रह्मा ब्रह्मविद्यां ब्रह्मणः परमात्मनो विद्यां ब्रह्मविद्याम् "येनाक्षरं पुरुषं वेद सत्यम्" (मुं. १–२–१३) इति विशेषणात्। परमात्मविषया हि सा। ब्रह्मणा वाग्रजेनोक्तेति ब्रह्मविद्या। तां ब्रह्मविद्यां सर्वविद्याप्रतिष्ठां सर्वविद्याभिव्यक्तिहेतुत्वात्सर्वविद्याश्रयामित्यर्थः। सर्वविद्यावेद्यं वा वस्त्वनयैव विज्ञायत इति। "येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्" (छां. ६–१–१) इति श्रुतेः सर्वविद्याप्रतिष्ठामिति च स्तौति विद्याम्। अथर्वाय ज्येष्ठपुत्राय ज्येष्ठश्चासौ पुत्रश्चानेकेषु ब्रह्मणः सृष्टिप्रकारेष्वन्यतमस्य

---

पठितमित्यर्थः। एवं चोपानिषत्पदेन ब्रह्मविद्या बोध्यते तत्प्रतिपादकत्वाद्ग्रन्थोऽपि लक्षणयोपनिषदित्यभिधीयते।

**महानिति**। ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम्॥ इति स्मृत्या धर्मज्ञानादिभिरन्यानतिक्रामतीति महत्त्वं ब्रह्मणः। अतिशेते–अतिक्रामति। द्योतनवतां–प्रकाशमयानाम्। **स्वातन्त्र्येणेति**। योसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ॥ इति स्मृत्या शुक्रशोणितसंयोगमन्तरेणाविर्भूतः। **न तथेति**। अन्येषां संसारिणां जन्म धर्माधर्मवशाज्जायतेऽस्य ब्रह्मणस्त्वभिव्यक्तिर्धर्माधर्मनिरपेक्षतया लोकानुग्रहार्थं भवतीत्यर्थः। विद्यास्तुतिमेवाह–**स एवमिति**। येन–विज्ञानेन। यया विद्ययेत्यर्थः। **सर्वविद्याभिव्यक्तिहेतुत्वादिति**। तत्त्वमस्यादिवाक्यजन्यं यज्ज्ञानं तद्वृत्त्यभिव्यक्तं ब्रह्मैव ब्रह्मविद्या। ब्रह्म च सर्वाभिव्यञ्जकं ततश्च सर्वविद्यानामभिव्यञ्जकतयाश्रीयत इति सर्वविद्याश्रया। **सर्वविद्यावेद्यं वेति**। ब्रह्मविद्यायामुत्पन्नायां ज्ञातव्यमेव नावशिष्यते तेनेयं सर्वविद्याप्रतिष्ठा। सर्वविद्यानां प्रतिष्ठा समाप्तिर्यत्रेत्यर्थः। अन्यज्ञानज्ञेयं सर्वमनयैव विज्ञायत इति सर्वविद्यावेद्यत्वम्। **स्तौति विद्यामिति**। अर्थवादोऽयं ब्रह्मविद्यायाः। स्वयमुद्भूतो ज्ञानैश्वर्यवान् ब्रह्मा प्रियाय ज्येष्ठपुत्रायेमां ब्रह्मविद्यामाहातः सर्वैः सा संग्राह्येति प्रवृत्तिजनकोऽयं ब्रह्मविद्याया अर्थवाद इत्यर्थः। **अथर्वायेति**। अथर्वशब्दोऽकारान्तो नकारान्तश्च। अत्र मन्त्रेऽथर्वायेति अकारान्तः प्रयुक्तः। अग्रे द्वितीयमन्त्रेऽथर्वण

सृष्टिप्रकारस्य प्रमुखे मूर्धन्यथर्वा सृष्ट इति ज्येष्ठस्तस्मै ज्येष्ठपुत्राय प्राहोक्तवान्॥ १

अथर्वणे यां प्रवदेत ब्रह्मा-
थर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवहाय प्राह
भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

यामेतामथर्वणे प्रवदेत प्रावदद्ब्रह्मविद्यां ब्रह्मा, तामेवं ब्रह्मणः प्राप्तामथर्वा पुरा पूर्वमुवाचोक्तवानङ्गिरेऽङ्गिर्नाम्ने ब्रह्मविद्याम् । स चाङ्गिर्भारद्वाजाय भारद्वाजगोत्राय सत्यवहाय सत्यवहनाम्ने प्राह प्रोक्तवान् । भारद्वाजोऽङ्गिरसे स्वशिष्याय पुत्राय वा परावरां परस्मात्परस्मादवरेणावरेण प्राप्तेति परावरा परावरसर्वविद्याविषयव्याप्तेर्वा, तां परावरामङ्गिरसे प्राहेत्यनुषङ्गः ॥ २ ॥

शौनको ह वै महाशालोऽङ्गिरसं
विधिवदुपसन्नः पप्रच्छ, कस्मिन्नु भगवो
विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

शौनकः शुनकस्यापत्यं महाशालो महागृहस्थोऽङ्गिरसं भारद्वाजशिष्यमाचार्यं विधिवद्यथाशास्त्रमित्येतत् । उपसन्न उपगतः सन्पप्रच्छ पृष्टवान् । शौनकाङ्गिरसोः संबन्धादर्वाग्विधिवद्विशेषणाभावादुपसदनविधेः

---

इति नकारान्तः प्रयुक्तः । **सृष्टिप्रकारेष्विति** । मनुस्मृत्यादिषु सृष्टयो विविधाः कथितास्तत्तद्युगभेदेन । तत्र कस्मिंश्चित्सृष्टिप्रकारेऽथर्वादिसृष्टिः । तामवलम्ब्य ज्येष्ठपुत्रायेत्युक्तम् ॥१॥

**यामिति** । **प्रवदेतेति** । व्यत्ययो बहुलमिति पाणिनिसूत्रेण छन्दसि कालाद्यनियमात् प्रावददित्यर्थमाह । **भारद्वाजायेति** । भारद्वाजगोत्राय सत्यवहनाम्ने । **परावरामिति** । अर्थद्वयं क्रमेणाह—**परस्मादिति** । पूर्वस्मात्पूर्वस्माद्गुरोरवरेणावरेण शिष्येणाधिगतेति प्रथमपक्षेऽर्थः । अत्र पक्षे सामर्थ्याभावादार्षः समासः । द्वितीयपक्षे परा निर्गुणब्रह्मप्रतिपादिका । अवरा धर्माधर्मसाधनतत्फलगौणब्रह्मप्रतिपादिका । इति द्विविधविद्याव्यापकत्वादियं ब्रह्मविद्या लक्षणया परावरा । अत्र द्वितीयपक्षे परा चासाववरेति कर्मधारयः । अनुषंगः—संबन्धः ॥ २ ॥

**शौनक इति** । महाशालो महत्यो होमशालापाकशालादयो यस्य । **यथाशास्त्रमिति** । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति शास्त्रानुसारमित्यर्थः । **गम्यत इति** । अथर्वाणमारभ्य शौनकपर्यन्तं विधिवदिति नोक्तं ततः परं शौनकांगिरसोः प्रसंग उक्तम् । तेन ततः पूर्वेषामथर्वादीनां समित्पाणित्वादिविधिर्न नियतः ।

पूर्वेषामनियम इति गम्यते । मर्यादाकरणार्थं मध्यदीपिकान्यायार्थं वा विशेषणम् । अस्मदादिष्वप्युपसदनविधेरिष्टत्वात् । किमित्याह—कस्मिन्नु भगवो विज्ञाते, नु इति वितर्के, भगवो हे भगवन्सर्वं यदिदं विज्ञेयं विज्ञातं विशेषेण ज्ञातमवगतं भवतीति 'एकस्मिञ्ज्ञाते सर्वविद्भवति' इति शिष्टप्रवादं श्रुतवाञ्शौनकस्तद्विशेषं विज्ञातुकामः सन्कस्मिन्निति वितर्कयन्पप्रच्छ । अथवा, लोकसामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ । सन्ति लोके सुवर्णादिशकलभेदाः सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकैः । तथा किं न्वस्ति सर्वस्य जगद्भेदस्यैकं कारणम् । यत्रैकस्मिन्विज्ञाते सर्वं विज्ञातं भवतीति । नन्वविदिते हि कस्मिन्निति प्रश्नोऽनुपपन्नः । किमस्ति तादिति तदा प्रश्नो युक्तः । सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात् । यथा कस्मिन्निधेयमिति । न । अक्षरबाहुल्यादायासभीरुत्वात्प्रश्नः संभवत्येव किं न्वेकस्मिन्विज्ञाते सर्ववित्स्यादिति ॥ ३ ॥

---

यद्यनुष्ठितस्तर्हि भूषणाय नो चेन्न दूषणाय । शौनकप्रभृत्यस्मदादिषु तु सोऽत्यन्तमावश्यक इत्यभिप्रायः । उपसदनविधिः—गुरुसमीपगमनविधिः । **मर्यादाकरणार्थमिति** । शौनकप्रभृतिसर्वशिष्यैः समिद्ग्रहणादिविधिरनुष्ठेय एवेति शौनकप्रभृतिषु मर्यादार्थमित्यर्थः । ननु वेद उक्तो विधिरथर्वप्रभृतिभिरपि कुतो नानुष्ठेय इति शंकामपाकर्तुं पक्षान्तरमाह—**मध्य-दीपिकान्यायार्थमिति** । देहलीदीपिकान्यायेनेत्यर्थः । यथा देहल्यां स्थापितो दीपस्तदुभयपार्श्वस्थलं प्रकाशयति तद्वदित्यर्थः । मध्यमणिन्यायोऽप्येतत्सम एव । तथाच विधिवदिति पदं देहलीदीपकन्यायेनाथर्वादिषु पूर्वेषु शौनकादिषु परेषुच संबध्यते केवलशौनके विधिवत्पदस्य संबन्धेऽस्मदादिषूपसदनं न स्यात्तदनिष्टम् । तदाह—**अस्मदादिष्वपीति** । **शिष्टप्रवाद-मिति** । शिष्टास्तु मनुव्यासप्रभृतय इति शारीरभाष्ये भगवत्पूज्यपादाः । **लोकसामान्य-दृष्ट्येति** । सुवर्णालंकारादिलौकिकदृष्टान्तैः । उपादानकारणात्कार्यमभिन्नं तेनोपादाने ज्ञाते कार्यं ज्ञातं भवतीति सामान्यव्याप्त्या पप्रच्छेत्यर्थः । लोकदृष्टिं विवृणोति—**सन्ति लोक इति** । सुवर्णत्वज्ञानेन सुवर्णशकलभेदानां कटककुण्डलरुचकादीनां ज्ञानं भवति लौकिकानाम् । **जगद्भेदस्येति** । भेदः पदार्थः । जगद्रूपस्य पदार्थस्येत्यर्थः । ज्ञातपूर्वे यत्तद्विषयक एव प्रश्नः संभवति नाज्ञातविषयक इत्याह—**नन्विति** । **कस्मिन्निधेयमिति** । सर्वेषु पात्राद्यधिकरणेषु ज्ञातेषु कस्मिन्पात्रविशेषे निधेयं घृतादिकमिति प्रश्नः संभवतीत्यर्थः । **अक्षरबा-हुल्यादिति** । किमस्ति तत् यस्मिन्नेकस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रश्नेऽक्षरबाहुल्यं स्यात्तच्चायासकारि तन्मास्त्विति भयत्रस्तत्वात्कस्मिन्न्वित्यादिः प्रश्नो लाघवादित्यर्थः ॥ ३ ॥

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह**
**स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥**

तस्मै शौनकाय सोऽङ्गिरा ह किलोवाचोक्तवान् । किमित्युच्यते । द्वे विद्ये वेदितव्ये ज्ञातव्ये इति । एवं ह स्म किल यद्ब्रह्मविदो वेदार्थाभिज्ञाः परमार्थदर्शिनो वदन्ति । के त इत्याह । परा च परमात्मविद्या । अपरा च धर्माधर्मसाधनतत्फलविषया । ननु कस्मिन्विदिते सर्वविद्भवतीति शौनकेन पृष्टं, तस्मिन्वक्तव्येऽपृष्टमाहाङ्गिराः—द्वे विद्ये इत्यादि । नैष दोषः । क्रमापेक्षत्वात्प्रतिवचनस्य । अपरा हि विद्या, अविद्या । सा निराकर्तव्या तद्विषये हि अविदिते न किंचित्तत्त्वतो विदितं स्यादिति 'निराकृत्य हि पूर्वपक्षं पश्चात्सिद्धान्तो वक्तव्यो भवति' इति न्यायात् ॥ ४ ॥

**तत्रापरा, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः**
**शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ।**
**अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥**

तत्र का अपरेत्युच्यते । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येते चत्वारो वेदाः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि

---

**तस्मा इति** । द्वे विद्ये वेदितव्ये इति यत्तद्ब्रह्मविदो वदन्तीत्यन्वयः । **अपृष्टमिति** । नापृष्टं कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।' इति स्मृतावपृष्टोत्तरणस्य निषेधात् । **नैष दोष इति** । शौनकप्रश्नः किं तदस्ति यस्मिन्नेकस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्योत्तरं ब्रह्मणि ज्ञाते सर्वमिदं विज्ञातं भवति नान्यस्मिन् । अयमर्थोऽपरविद्यानिराकरणं विना न बुद्धिगतो भवेत्तदर्थं द्वे विद्ये इति विद्याविभागकथनं तत्रापरविद्यानिराकरणं यतोऽपरविद्याविद्यैव पूर्वपक्षरूपा । तन्निराकरणमावश्यकमित्याह—**निराकृत्येति** ॥ ४ ॥

**तत्रेति** । अपरा—स्वर्गादिफलसर्वज्ञानसाधनविषया । **अपरा विद्येति** । पुराणन्यायमीमांसा धर्मशास्त्रांगमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति स्मृतेश्चतुर्दश विद्याः । ता अपराविद्येत्यभिधीयन्ते । शिक्षा—पाणिन्यादिकृता । कल्पः—श्रौतस्मार्तसूत्रे तत्तच्छाखाधिकृततया कात्यायनापस्तम्बाश्वलायनादिमुनिप्रणीते । व्याकरणम्—पाणिनिकृतम् । निरुक्तं—यास्ककृतम् । छन्दः—पिंगलकृतम् । ज्योतिषम्—लगधमुनिकृतम् । इतिहासादीनि पञ्चाचार्यैर्न व्याख्यातानि तेन प्रक्षिप्तानीति गम्यते । इति नारायणविरचितायां मुण्डकोपनिषद्दीपिकायां कथनाद्दीपिकाकारैरितिहासादिपञ्चकात्मकः पाठो

पदेषाऽपरा विद्या । अथेदानीमियं परा विद्योच्यते यया तद्वक्ष्यमाणविशेषणम-क्षरमधिगम्यते प्राप्यते । अधिपूर्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात् । न च परप्राप्तेरवगमार्थस्य च भेदोऽस्ति । अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरम् । ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यान्मोक्षसाधनं च । "या वेदबाह्याः स्मृतयः" (म. स्मृ. १२–९५) इति हि स्मरन्ति । कुदृष्टित्वान्निष्फलत्वादनादेया स्यात् । उपनिषदां च ऋग्वेदादिबाह्यत्वं स्यात् । ऋग्वेदादित्वे तु पृथक्करणमनर्थकम् । अथ परेति । न । वेद्यविषयविज्ञानस्य विवक्षितत्वात् । उपनिषद्वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितं नोपनिषच्छब्दराशिः । वेदशब्देन तु सर्वत्र शब्दराशिर्विवक्षितः । शब्दराश्यधिगमेऽपि यत्नान्तरमन्तरेण गुर्वभिगमनादिलक्षणं वैराग्यं च नाक्षराधिगमः संभवतीति पृथक्करणं ब्रह्मविद्याया अथ परा विद्येति ॥ ५ ॥

यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञान-कालादन्यत्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्षणः न तथेह पराविद्याविषये ।

---

लभ्य इति प्रतीयते । **वक्ष्यमाणविशेषणमिति** । अद्रेश्यमग्राह्यमगोत्रमवर्णमित्याद्युत्तर-मन्त्रोक्तविशेषणविशेषितमित्यर्थः । **प्रायश इति** । 'अधिगच्छति श्लोकमित्यत्र ज्ञानार्थकस्य प्रयोगात् प्रायश इत्युक्तम् । प्राप्तिर्ज्ञानं च तात्पर्यतोऽभिन्नमेवेत्याह—**न चेति** । अपायः—विश्लेषः । परप्राप्तिर्नामाविद्यानाशः । **नार्थान्तरमिति** । उभावेकार्थभूतौ पर्यायावित्यर्थः । एवं च पराविद्याया ऋग्वेदादिबाह्यत्वेन परत्वं मोक्षसाधनत्वं च न स्यादिति शंकते-**नन्विति** । **या वेदबाह्या** इति । या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः । इति संपूर्णश्लोको मनुस्मृतौ ( १२–९५ ) अनादेया–अग्राह्या । **ऋग्वेदादिबाह्यत्वमिति** 'ब्रह्मविद्याया वेदबाह्यत्वे तदर्थानामुपनिषदामपि ऋग्वेदादिबाह्यत्वं प्रसज्येतेत्यर्थः । **नेति** । उत्तरमाह । परा विद्या नाम ब्रह्मसाक्षात्कारः । नतु तत्कारणभूत उपनिषच्छब्दराशिः । ततश्चानुभवजन्यज्ञानाद्ब्रह्म प्राप्यत इत्युत्तरग्रन्थतात्पर्यम् । **वेद्यविषयविज्ञानस्येति** । वेद्यं ब्रह्म तद्विषयं विज्ञानमपरोक्षज्ञानम् । **विवक्षितत्वादिति** । वक्तुमिष्टत्वादित्यर्थः । **प्राधान्येनेति** । अपरोक्षज्ञानं प्रधानम् । ब्रह्मभावसाधकत्वात् । उपनिषच्छब्दराशिस्तदङ्गभूतः परम्परया ब्रह्मभावसाधकः । शब्दज्ञाने सत्यपि यावत्साधको न गुरुसमीपं गच्छेद्वैराग्यं नाप्नुयात्तावत्पर्यन्तं नाक्षरब्रह्मज्ञानमित्यभिप्रायः ॥ ५॥

कर्मज्ञानाद् ब्रह्मज्ञानं विलक्षणं ततस्तयोः पृथक्करणमित्याह— **यथेति** । **विधिविषय इति** । दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ । **कर्त्राद्यनेकेत्यादि** । कर्तृकर्म-

वाक्यार्थज्ञानसमकाल एव तु पर्यवसितो भवति । केवलशब्दप्रकाशितार्थ-ज्ञानमात्रानिष्ठाव्यतिरिक्ताभावात् । तस्मादिह परां विद्यां सविशेषणेनाक्षरेण विशिनष्टि—यत्तदद्रेश्यमित्यादिना ।

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण-**
**मचक्षुःश्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं**
**तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥**

वक्ष्यमाणं बुद्धौ संहृत्य सिद्धवत्परामृशति—यत्तदिति । अद्रेश्यमदृश्यं सर्वेषां बुद्धीन्द्रियाणामगम्यमित्येतत् । दृशेर्बहिष्प्रवृत्तस्य पञ्चेन्द्रियद्वारकत्वात् । अग्राह्यं कर्मेन्द्रियाविषयमित्येतत् । अगोत्रं गोत्रमन्वयो मूलमित्यनर्थान्तरम् । अगोत्रमनन्वयमित्यर्थः । न हि तस्य मूलमस्ति येनान्वितं स्यात् । वर्ण्यन्त इति वर्णा द्रव्यधर्माः स्थूलत्वादयः शुक्लत्वादयो वा । अविद्य-

---

करणसंप्रदानादयो ऽनेके कारकाः साधकास्तेषामुपसंहारो ग्रहणं तद्द्वारेत्यर्थः । अयमर्थः । दर्शपौर्णमासाभ्यां स्वर्गकाम इत्यादिविधिवाक्यार्थज्ञानानन्तरं यजमानः कर्ता होमाख्यं कर्म, घृतादिहविः करणं, अग्नीषोमाद्या देवताः संप्रदानं वेद्याद्युपकरणं तत्संग्रहपूर्वकं किंचिदग्निहोत्रादिकमनुष्ठेयं भवति । अत्र तु ब्रह्मविज्ञानविषये न किंचिदन्यत्संपादनीयं केवलं तत्त्वमस्यादि वाक्यार्थापरोक्षज्ञानसमय एव समाप्तं कार्यम् । यतोऽत्र केवलं शब्दार्थज्ञाननिष्ठैव संपादनीया । ननु ततोऽन्यत्किंचित् । इति । **अन्यत्रेति** । वाक्यार्थज्ञानादनन्तरमित्यर्थः । पर्यवसितः-समाप्तः । **विशिनष्टीति** । पृथक् ज्ञापयतीत्यर्थः ।

ययाः धीराः ( यत्तदद्रेश्यमित्यादि ) पश्यन्ति सा परेत्यन्वयः पूर्वोत्तरमन्वयोः । **बुद्धौ संहृत्येति** । वक्ष्यमाणं बुद्धिस्थं कृत्वेत्यर्थः । सिद्धवत्परामृश्यते-सिद्धमिव संपाद्य तच्छब्देन बोध्यते । **यत्तदिति । अद्रेश्यमिति** । अदृश्यमित्यर्थेऽद्रेश्यमिति वैदिकं रूपम् । **बुद्धीन्द्रियाणामिति** । पञ्चानां ज्ञानेन्द्रियाणाम् । **दृशेरिति** । दर्शिज्ञानम् । यदा ज्ञानं मनसो विनिर्गत्य घटादिबाह्यविषयेषु प्रवृत्तं भवति तदा चक्षुरादीनि पञ्चेन्द्रियाणि तद्द्वाराणि भवन्ति । **कर्मेन्द्रियाविषयमिति** । पाणिपादादीनां पञ्चानां कर्मेन्द्रियाणामविषयभूतम् । चक्षुःश्रोत्रघ्राणत्वग्जिह्वाख्यानि पञ्च ज्ञानेन्द्रियाणि । वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । **अनर्थान्तरमिति** । अन्योऽर्थोऽर्थान्तरं, न अर्थान्तरं, अनर्थान्तरम् इति विग्रहः । गोत्रमन्वयो मूलमिति शब्दार्थेषु भेदो नास्ति पर्यायभूता एवेमे शब्दा इत्यर्थः । **नामरूपाविषये इति** । नाम शब्दः सर्वैः प्राणिभिः शब्दः श्रोत्रेण ज्ञायते रूपं च चक्षुषा ज्ञा-

माना वर्णा यस्य तदवर्णमक्षरम् । अचक्षुःश्रोत्रं चक्षुश्च श्रोत्रं च नामरूपविषये करणे सर्वजन्तूनां ते अविद्यमाने यस्य तदचक्षुःश्रोत्रम् । "यः सर्वज्ञः सर्ववित्" इत्यादिचेतनावत्त्वविशेषणत्वात्प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वं, तदिहाचक्षुःश्रोत्रमिति वार्यते । "पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिदर्शनात् । किंच तदपाणिपादं कर्मेन्द्रियरहितमित्येतत् । यत एवमग्राह्यमग्राहकं चातो नित्यमविनाशि । विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभुम् । सर्वगतं व्यापकमाकाशवत्सुसूक्ष्मं शब्दादिस्थूलत्वकारणरहितत्वात् । शब्दादयो ह्याकाशवाय्वादीनामुत्तरोत्तरं स्थूलकारणानि तदभावात्सुसूक्ष्मम् । किं च तदव्ययमुक्तधर्मत्वादेव न व्येतीत्यव्ययम् । न ह्यनङ्गस्य स्वाङ्गापचयलक्षणो व्ययः सम्भवति शरीरस्येव। नापि कोशापचयलक्षणो व्ययः सम्भवति राज्ञ इव । नापि गुणद्वारको व्ययः सम्भवत्यगुणत्वात्सर्वात्मकत्वाच्च । यदेवंलक्षणं भूतयोनिं भूतानां कारणं पृथिवीव स्थावरजङ्गमानां परिपश्यन्ति सर्वत आत्मभूतं सर्वस्याक्षरं पश्यन्ति धीरा धीमन्तो विवेकिनः । ईदृशमक्षरं यया विद्ययाधिगम्यते सा परा विद्येति समुदायार्थः ॥ ६ ॥

भूतयोनिरक्षरमित्युक्तं तत्कथं भूतयोनित्वमित्युच्यते प्रसिद्धदृष्टान्तैः ।

**यथोर्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः संभवन्ति ।**

---

यते तदुभयं यस्य नास्तीत्यर्थः । ननु सर्वत्र प्राप्तिपूर्वक एव निषेधो भवति । अत्र तु चक्षुःश्रोत्रस्य प्राप्तिः कुतो येन 'अचक्षुःश्रोत्रे' इति निषिध्यत इति चेन्न । यः सर्वज्ञः सर्वविदित्यन्तिममन्त्रे ज्ञानविशिष्टत्वमुक्तं तेन चक्षुरादिज्ञानसाधनं स्यादिति तन्निराकरणार्थमचक्षुःश्रोत्रमित्युक्तेः सार्थक्यात् । अर्थसाधकत्वं—दर्शनश्रवणादिकार्यसाधकत्वम् । **आकाशवदिति** । नैयायिकनय आकाशं व्यापकं तदभिप्रायेणाकाशदृष्टान्तः । **तदभावादिति** । शब्दाद्यभावादित्यर्थः । अनंगस्य—स्थूलसूक्ष्मादिशरीररहितस्य । अपचयः-क्षयः । कोशापचयः—द्रव्यनिधेः क्षयः । राज्ञो द्रव्यनिधिः क्षीयते तेन तस्य क्षयो भवति न तथा ब्रह्मणः **गुणद्वारक इति** । गुणक्षयद्वारापि नास्य क्षयः। भूतानां-प्राणिनाम् । **पृथिवीवेति** पार्थिवानां सर्वेषां विकाराणां पृथिव्युपादानकारणम् । **स्थावरजंगमानामिति** । तिष्ठन्तीति स्थावरा वृक्षपाषाणादयः । गच्छन्तीति जंगमा मनुष्यपश्वादयः । **समुदायार्थ** इति । संपूर्णमन्त्रार्थ इत्यर्थः ॥ ६ ॥

**प्रसिद्धदृष्टान्तैरिति** । ऊर्णनाभ्यादिभिस्त्रिभिर्दृष्टान्तैः ।

**यथा सतः पुरुषात्केशलोमानि**
**[illegible]भवतीह विश्वम् ॥ ७ ॥**

यथा लोके प्रसिद्ध ऊर्णनाभिर्लूताकीटः किंचित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तानेव तन्तून्बहिः प्रसारयति पुनस्तानेव गृह्णते च गृह्णाति. स्वात्मभावमेवापादयति । यथा च पृथिव्यामोषधयो व्रीह्यादिस्थावराणीत्यर्थः । स्वात्माव्यतिरिक्ता एव सम्भवन्ति प्रभवन्ति । यथा च सतो विद्यमानाज्जीवतः पुरुषात्केशलोमानि केशाश्च लोमानि च सम्भवन्ति विलक्षणानि । यथैते दृष्टान्तास्तथा विलक्षणं सलक्षणं च निमित्तान्तरानपेक्षाद्यथोक्तलक्षणादक्षरात्सम्भवति समुत्पद्यत इह संसारमण्डले विश्वं समस्तं जगत् । अनेकदृष्टान्तोपादानं तु सुखार्थप्रबोधनार्थम् ॥ ७ ॥

---

**यथा लोक इति** । अत्र दृष्टान्तत्रयम् । १ ऊर्णनाभिः कारणं, तन्तवः कार्यम् । २ पृथिवी कारणं, ओषधयः कार्यम् । ३ सन् पुरुषः कारणं, केशलोमानि कार्यम् । तत्र प्रथमदृष्टान्तेन ब्रह्मणोऽसहायत्वान्न कारणत्वमिति शंका निवर्त्यते । तथाहि ब्रह्म न कारणं सहायशून्यत्वात् । कुलालादयो हि चक्रादिसहायसत्व एव कार्यस्य जनका न तदभावे इति शंका निराक्रियते प्रथमेनोर्णनाभिदृष्टान्तेन । ऊर्णनाभिः सहायशून्योऽपि तन्तुसर्जनतन्तुविलयनादिकार्यं संपादयति तद्वद्ब्रह्म । द्वितीयदृष्टान्तेन ब्रह्म न जगत उपादानं सर्वावयवैस्तदभिन्नत्वादिति शंकां निराकरोति । तथाहि ब्रह्म न जगत उपादानं जगतस्तेन सह सर्वावयवैरभेदाद्यथा देवदत्तो न स्वरूपोत्पादकस्तद्वत् । इमां शंकां निराकरोति द्वितीयेन पृथिवीदृष्टान्तेन । यथा पृथिवी सर्वशः स्वाभिन्नानां भूतानामुत्पादिका तद्वद्ब्रह्म स्वाभिन्नजगत उत्पादकम् । तृतीयेन पुरुषदृष्टान्तेन जगन्न ब्रह्मरूपोपादानकारणजन्यं तद्विलक्षणत्वादिति शंकां निराकरोति । तथाहि अनित्यं जगत् नित्यब्रह्मरूपादुपादानकारणान्न जायते विलक्षणत्वात् यद्यद्विलक्षणं तत्तदुपादानकं न भवति । पीततन्तवः पीतपटं प्रति उपादानकारणं भवितुमर्हन्ति सलक्षणत्वात् । ब्रह्मजगतोस्तु नित्यानित्ययोर्वैलक्षण्यं तेन न तयोरुपादानकारणकार्यत्वं इति शङ्कां निराकरोति तृतीयेन पुरुषदृष्टान्तेन । यथा चेतनोऽपि पुरुषः केशलोमादीनामचेतनानामुपादानं तद्वत् ब्रह्म विलक्षणमपि जगत उपादानम् । **स्वात्मभावमेवापादयतीति** । आत्मनि विलीनान् करोतीत्यर्थः । **विलक्षणमिति** । विभिन्नलक्षणं विजातीयमित्यर्थः । **सलक्षणमिति** । समानलक्षणं सजातीयमित्यर्थः । **निमित्तान्तरानपेक्षादिति** । अन्यनिमित्तमनपेक्ष्य ब्रह्म जगदुत्पादयतीत्यर्थः । **यथोक्तलक्षणादिति** । अदृश्यमग्राह्यमिति पूर्वमन्त्रोक्तलक्षणयुतादित्यर्थः । ननु लूतातन्तुरूपेणैकेनैव दृष्टान्तेन पूर्वोक्तशंकात्रयमपाकर्तुं शक्यं किमर्थं दृष्टान्तत्रयग्रहणमित्यत आह—**सुखार्थप्रबोधनार्थमिति** । पूर्वोक्तरीत्या भिन्नदृष्टान्तेन भिन्नशंकानिराकरणे बालानां सुखेन बोधो भवतीत्यतो दृष्टान्तत्रयोपपादनमिति भावः ॥ ७ ॥

यद्ब्रह्मण उत्पद्यमानं विश्वं तदनेन क्रमेणोत्पद्यते न युगपद्बदरमुष्टिप्रक्षेपवदिति क्रमनियमविवक्षार्थोऽयं मन्त्र आरभ्यते ।

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।**
**अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥८॥**

तपसा ज्ञानेनोत्पत्तिविधिज्ञतया भूतयोन्यक्षरं ब्रह्म चीयत उपचीयत उत्पिपादयिषदिदं जगदङ्कुरमिव बीजमुच्छूनतां गच्छति पुत्रमिव पिता हर्षेण । एवं सर्वज्ञतया सृष्टिस्थितिसंहारशक्तिविज्ञानवत्तयोपचितात्ततो ब्रह्मणोऽन्नमद्यते भुज्यत इत्यन्नमव्याकृतं साधारणं कारणं संसारिणां व्याचिकीर्षितावस्थारूपेणाभिजायत उत्पद्यते । ततश्चाव्याकृताद्व्याचिकीर्षितावस्थादन्नात्प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितो जगत्साधारणोऽविद्याकामकर्मभूतसमुदायबीजाङ्कुरो जगदात्माभिजायत इत्यनुषङ्गः । तस्माच्च प्राणान्मनो मनआख्यं संकल्पविकल्पसंशयनिर्णयाद्यात्मकमभिजायते । ततोऽपि संकल्पा-

---

**बदरमुष्टिप्रक्षेपवदिति** । यथा कश्चित्पुरुषो मुष्टिगतानि बदरफलानि भूमावेककालं प्रक्षिपति न तथा ब्रह्मणान्नप्राणादिवस्तूनि सहसैव प्रक्षिप्तानि किन्तु तत्रास्ति नियतः क्रमः स चानेन मन्त्रेण द्योत्यते । विवक्षा–वक्तुमिच्छा ।

**उत्पिपादयिषदिति** । उत्पादयितुमिच्छत्–उत्पिपादयिषत् । यथांकुरमुत्पादयत् बीजं ततः प्राक्काले किंचित्स्थूलं भवति तद्वत् जगदुत्पत्तिप्राक्काले ब्रह्म वर्धते ज्ञानेन । उच्छूनतां–वृद्धिम् । स्थूलत्वे द्वितीयो दृष्टान्तः । **पुत्रमिवेति** । चीयत इत्यस्य 'बहु स्यां प्रजायेय' इतीक्षणवद्भवतीति दीपिकाकृतोऽर्थः । **अव्याकृतमिति** । महाभूतसर्गादिसंस्कारस्थानभूतं सत्त्वरजस्तमोगुणत्रयसाम्यमयं मायातत्त्वमिहाव्याकृतशब्देन बोध्यम् । **व्याचिकीर्षितेत्यादि** । व्याकर्तुमिष्टा या पञ्चमहाभूताद्यवस्था तद्रूपेण जायत इत्यर्थः । **व्याचिकीर्षितावस्थादिति** । अन्नादित्यस्य विशेषणम् । व्याचिकीर्षितावस्थात इति पाठः पूर्वभाष्येण सह विसंगतः । पूर्वस्मिन्कल्पे हिरण्यगर्भत्वप्राप्तिनिमित्तं प्रकृष्टं ज्ञानं कर्म च येनानुष्ठितं तदनुग्रहाय मायोपाधिकं ब्रह्म हिरण्यगर्भावस्थाकारेण विवर्तते । स च जीवस्तदवस्थाभिमानी हिरण्यगर्भ उच्यते इत्यभिप्रेत्याह— **ब्रह्मण इति** । अस्य षष्ठ्यन्तपदस्य ज्ञानक्रियाशक्त्याधिष्ठित इति समासगतेन ज्ञानक्रियाशक्तिशब्देन सह संबन्धः । ततश्चायं समासः 'सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो न' इति निषेधादसामर्थ्येऽपि देवदत्तस्य गुरुकुलमितिवद्गमकत्वात्साधुः । ब्रह्मसंबन्धिज्ञानक्रियाशक्तिभिरधिष्ठितः प्राण इत्यर्थः । ज्ञानशक्तिभिः क्रियाशक्तिभिश्चाधिष्ठितं विशिष्टं जगद् व्यष्टिरूपं तस्य साधारणः समष्टिरूपः सूत्रसंज्ञक इति बोधयति–**जगत्साधारण इति** । **मन आख्यमिति** । इदं समष्टिरूपं विवक्षितम् ।

चात्मकान्मनसः सत्यं सत्याख्यमाकाशादिभूतपञ्चकमभिजायते । तस्मात्सत्याख्याद्भूतपञ्चकादण्डक्रमेण सप्त लोका भूराद्यः । तेषु मनुष्यादिप्राणिवर्णाश्रमक्रमेण कर्माणि । कर्मसु च निमित्तभूतेष्वमृतं कर्मजं फलम् । यावत्कर्माणि कल्पकोटिशतैरपि न विनश्यन्ति तावत्फलं न विनश्यतीत्यमृतम्॥८॥

उक्तमेवार्थमुपसंजिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह—

**यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।**
**तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते॥ ९ ॥**

**इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डके प्रथमः खण्डः॥ १ ॥**

य उक्तलक्षणोऽक्षराख्यः सर्वज्ञः सामान्येन सर्वं जानातीति सर्वज्ञः। विशेषेण सर्वं वेत्तीति सर्ववित् । यस्य ज्ञानमयं ज्ञानविकारमेव सार्वज्ञ्यलक्षणं तपोऽनायासलक्षणं तस्माद्यथोक्तात्सर्वज्ञादेतदुक्तं कार्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किंच नामासौ देवदत्तो यज्ञदत्त इत्यादिलक्षणम् । रूपमिदं शुक्लं नीलमित्यादि। अन्नं च व्रीहियवादिलक्षणं जायते पूर्वमन्त्रोक्तक्रमेणेत्यविरोधो द्रष्टव्यः ॥९॥

इति मुण्डकोपनिषद्भाष्ये प्रथममुण्डके प्रथमः खण्डः ॥१॥ १ ॥

---

व्यष्टिरूपं मनस्तु लोकसृष्ट्यनन्तरं जायते । **संकल्पविकल्पेत्यादि** । इमाः संकल्पाद्याश्चित्तचतुष्टयस्य वृत्तयः । मनः, बुद्धिः, अहंकारः, चित्तमिति चित्तचतुष्टयम् । **सत्यमिति** । सत्यपदेन, आकाशादिभूतपञ्चकं गृह्यते तदाह—**आकाशादिभूतपञ्चकमिति** । कर्मफलस्यामृतपदाभिधेयत्वे हेतुमाह—**यावदित्यादि** । 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम् । अपाम सोमममृता अभूम' इति श्रुतेः । अत्रापि कल्पकोटिशतस्थायित्वमेवाक्षय्यमित्यादिपदस्यार्थः ॥ ८ ॥

**उपसंजिहीर्षुरिति** । उपसंहारं कर्तुमिच्छुरित्यर्थः । **वक्ष्यमाणार्थमिति** । अग्रे द्वितीयखण्डेऽविद्याविवरणमारम्भणीयं तदर्थं पूर्वोक्तपरविद्योपसंहारोऽस्मिन्मन्त्रे ।

**सामान्येनेति** । समष्टिरूपेण मायोपाधिनेत्यर्थः । **विशेषेणेति** । व्यष्टिरूपेणाविद्याख्येनोपाधिनानन्तजीवभावमापन्नः सर्वं स्वोपाधिभूतं तत्संसृष्टं च वेत्ति । एवं चाधिदैवेऽध्यात्मे च तत्त्वैक्यं बोधितम् । ननु यथा प्रजापतयः सृष्टौ तप एव साधनमङ्गीकुर्वते तद्वदनेनापि ब्रह्मणा सृष्टौ तपः साधनत्वेन स्वीकार्यम् । ततश्च तस्य संसारित्वं प्रसज्ज्येतेत्याशंक्याह—**यस्य ज्ञानमयमिति** । ज्ञानमयमित्यत्र विकारार्थे मयट् । ब्रह्मणस्तपस्तु न प्रजापतीनामिव क्लेशरूपं किन्तु ज्ञानात्मकम् । ज्ञानं च सत्त्वप्रधानमायाया विकारः । सत्त्वात्संजायत ज्ञानमित्युक्तेः । अस्य ज्ञानस्य विकारः सृज्यमानसर्वपदार्थज्ञातृत्वलक्षणस्तदेव तपः । न परिश्रमात्मकं तदाह—**सार्वज्ञ्यलक्षणमित्यादि** ॥ ९ ॥

इति श्रीमुण्डकोपनिषदि शांकरभाष्ये बालबोधिन्यां प्रथममुण्डके प्रथमः खण्डः ॥१॥१॥

साङ्गा वेदा अपरा विद्योक्ता—ऋग्वेदो यजुर्वेद इत्यादिना । यत्तद्-द्रेश्यमित्यादिना नामरूपमन्नं च जायत इत्यन्तेन ग्रन्थेनोक्तलक्षणमक्षरं यया विद्ययाधिगम्यत इति परा विद्या सविशेषणोक्ता । अतः परमनयोर्वि-द्ययोर्विषयौ विवेक्तव्यौ संसारमोक्षावित्युत्तरो ग्रन्थ आरभ्यते । तत्रापरावि-द्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारोऽनादिरनन्तो दुःखस्वरूप-त्वाद्धातव्यः प्रत्येकं शरीरिभिः सामस्त्येन नदीस्रोतोवदव्यवच्छेदरूपसंबन्धस्त-दुपशमलक्षणो मोक्षः परविद्याविषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽद्वय इति । पूर्वं तावदपर-विद्याया विषयप्रदर्शनार्थमारम्भः । तद्दर्शने हि तन्निर्वेदोपपत्तिः । तथाच

---

पूर्वोत्तरखण्डयोः संगतिं दर्शयितुं वृत्तमनूद्योत्तरग्रन्थप्रयोजनमभिधत्ते—**सांगा वेदा इत्यादिना** । विवेक्तव्यौ—पृथक् प्रदर्शनीयौ । **संसारमोक्षाविति** । अपरविद्याविषयः संसारः । परविद्याविषयो मोक्षः ।

**कर्त्रादिसाधनक्रियाफलभेदरूप इति** । कर्ता यजमानः । आदिपदेन हविरा-दिसाधनं, क्रिया यज्ञः, फलं स्वर्गः, इति समूहात्मक एव संसारः । **अनादिरिति** । उपा-दानरूपेणायं संसारोऽनादिः । **अनन्त इति** । ज्ञानादेव तु कैवल्यमिति वचनाज्ज्ञानात्प्राक् संसारस्यान्ताभावात्तस्यानन्तत्वम् । दुःखरूपत्वात्—दुःखमयत्वात् । हातव्यः—त्यक्तव्यः । यद्यपि सुषुप्तौ स्वयमेव संसारो न प्रलीयते तेन तत्त्याग एव परंतु स सुषुप्तिगतः संसारत्यागोऽबुद्धिपूर्वकः । तत्र न त्यागफलं किंतु बुद्धिपूर्वकत्यागे तदाह—**सामस्त्येनेति** । सामस्त्येन—संपूर्णतया । स्वोपाध्यविद्याकार्यस्यात्यान्ति-कनाशस्तत्कारणीभूताविद्यानाशजन्यः । एतदेव विद्याफलम् । सुषुप्तौ तु अविद्याकार्यस्य नात्यन्तं विनाशः । अविद्यारूपकारणस्य विद्यमानत्वात् । सुखमहमस्वाप्सं न किंचिदवे-दिषमिति सुषुप्त्यनन्तरमनुभवात्तत्राविद्यायाः सत्त्वम् । अस्माभिर्यो हेयः संसारस्तत्स्वरूप-माह—**नदीस्रोतोवदिति** । गंगादिमहानदीप्रवाहो यथाविच्छिन्नधारस्तद्वदस्य संसारस्य रूपा-विच्छेदः । एतत्पर्यन्तं संसारस्वरूपमुक्तम् । अतःपरं मोक्षस्वरूपमाह—**तदुपशमलक्षण इति** । तच्छब्दः पूर्वपरामर्शकः । तस्य पूर्वोक्तस्य संसारस्य उपशम एव लक्षणं यस्येत्ये-तादृशो मोक्षः । **अनाद्यनन्त इति** । वास्तव एवानादिरनन्तो नोपाधिद्वारेण । अमरः-क्षयरहितः । अमृतः नाशरहितः । अपरविद्यायाः परविद्यायाश्च विषयौ प्रदर्श्य पूर्वमपराविद्याया विषयप्रद-र्शनं श्रुतेरभिप्रायमाह—**पूर्वमिति** । **तन्निर्वेदोपपत्तिरिति** । निर्वेदः—वैराग्यम् । एवं चापरविद्याविषयेऽग्निहोत्रादिषु वैराग्योत्पत्त्यर्थं प्रथमं तदुक्तिः । अन्यदपि कारणमपर-विद्याविषयप्रदर्शने इत्याह—**तथा चेति** ।

वक्ष्यति—" परीक्ष्य लोकान्कर्मचितान् " इत्यादिना । न ह्यप्रदर्शिते परीक्षोपपद्यत इति तत्प्रदर्शयन्नाह—

**तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यं-**
**स्तानि त्रेतायां बहुधा संततानि ।**
**तान्याचरथ नियतं सत्यकामा**
**एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥**

तदेतत्सत्यमवितथम् । किं तन्मन्त्रेष्वृग्वेदाद्याख्येषु कर्माण्यग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि कवयो मेधाविनो वसिष्ठादयो यान्यपश्यन्दृष्टवन्तः । यत्तदेतत्सत्यमेकान्तपुरुषार्थसाधनत्वात्तानि च वेदविहितान्यृषिदृष्टानि कर्माणि त्रेतायां त्रयीसंयोगलक्षणायां हौत्राध्वर्यवौद्गात्रप्रकारायामधिकरणभूतायां बहुधा बहुप्रकारं संततानि प्रवृत्तानि कर्मिभिः क्रियमाणानि त्रेतायां वा युगे प्रायशः प्रवृत्तानि । अतो यूयं तान्याचरथ निर्वर्तयथ नियतं नित्यं सत्यकामा यथाभूतकर्मफलकामाः सन्तः । एष वो युष्माकं पन्था मार्गः सुकृतस्य स्वयं निर्वर्तितस्य कर्मणो लोके फलनिमित्तं लोक्यते दृश्यते भुज्यत इति कर्मफलं लोक उच्यते । तदर्थं तत्प्राप्तय एष मार्ग इत्यर्थः । यान्येतान्यग्निहोत्रादीनि त्रय्यां विहितानि कर्माणि तान्येष पन्था अवश्यफलप्राप्तिसाधनमित्यर्थः ॥ १ ॥

तत्राग्निहोत्रमेव तावत्प्रथमं प्रदर्शनार्थमुच्यते, सर्वकर्मणां प्राथम्यात् तत्कथम् ।

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।**
**तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ॥ २॥**

---

**तदेतत्सत्यमिति** । असति प्रतिबन्धे वैदिककर्मावश्यमेव फलं जनयति ततः सत्यं तदित्यर्थः । **एकान्तपुरुषार्थसाधनत्वादिति** । एकान्तं निश्चयेन स्वर्गादिपुरुषार्थसाधनत्वं कर्मणाम् । **त्रेतायामिति** । ऋग्यजुःसामसमूहे त्रेताख्ये युगे वेत्यर्थद्वयम् । त्रयी—ऋग्यजुःसामवेदेति त्रयम् । तत्संयोगः यज्ञकर्मसु हौत्रादिद्वारा । तत्र ऋचैव हौत्रं, यजुषैवाध्वर्यवं, साम्नैवौद्गात्रम्, इति विधानात् हौत्रमृग्वेदविहितम् । आध्वर्यवं यजुर्वेदविहितम् । औद्गात्रं सामवेदविहितम् । सत्यकामाः—स्वर्गकामाः । **लोक इति** । लोकपदेन कर्मफलं गृह्यते तल्लोकशब्दव्युत्पत्त्या दर्शयति—**लोक्यत इति** । **तदर्थमिति** । लोक इति निमित्तार्थे सप्तमी । तेन लोकनिमित्तं कर्मफलनिमित्तमित्यर्थः ॥ १ ॥

**तत्रेति** । पूर्वोक्तकर्मसु । **प्राथम्यादिति** । अग्निहोत्रं—अन्याधानम् । 'आतपुत्रः कृत्वा

यदैवेन्धनैरभ्याहितैः सम्यगिद्धे समिद्धे हव्यवाहने लेलायते चलत्यर्चि-स्तदा तास्मिन्काले लेलायमाने चलत्यर्चिष्याज्यभागावाज्यभागयोरन्तरेण मध्य आवापस्थान आहुतीः प्रतिपादयेत्प्रक्षिपेद्देवतामुद्दिश्य । अनेकाहःप्रयोगापेक्षयाहुतीरिति बहुवचनम् । एष सम्यगाहुतिप्रक्षेपादिलक्षणः कर्ममार्गो लोकप्राप्तये पन्थास्तस्य च सम्यक्करणं दुष्करम् । विपत्तयस्त्वनेका भवन्ति ॥२॥

कथम्—

**यस्याग्निहोत्रमदर्शमपौर्णमास-**
**मचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।**
**अहुतमवैश्वदेवमविधिना हुत-**
**मासप्तमांस्तस्य लोकान्हिनस्ति ॥ ३ ॥**

यस्याग्निहोत्रिणोऽग्निहोत्रमदर्शं दर्शाख्येन कर्मणा वर्जितम् । अग्निहोत्रिभिरवश्यकर्तव्यत्वाद्दर्शस्य । अग्निहोत्रिसंबन्ध्यग्निहोत्रविशेषणमिव भवति । तदक्रियमाणमित्येतत् । तथापौर्णमासमित्यादिष्वप्यग्निहोत्रविशे-

---

केशोऽग्नीनादधीत' इति श्रुत्याग्न्याधानं विहितं तदनन्तरमेव सर्वेषु यज्ञकर्मस्वधिकारो भवत्यतोऽग्निहोत्रस्य प्राथम्यम् ।

**अभ्याहितैरिति** । अग्नौ स्थापितैरित्यर्थः । **आज्यभागाविति** । अन्तरान्तरेण युक्ते २ । ३ । ४ इति पाणिनिसूत्रेण द्वितीया । **आवापस्थान इति** । दक्षिणाग्निगार्हपत्याहवनीयेति त्रयोऽग्नयः । तत्र दर्शपूर्णमासेष्टौ आहवनीयाग्नेर्दक्षिणोत्तरपार्श्वयोः 'अग्नये स्वाहा, सोमाय स्वाहा' इति मन्त्राभ्यामाज्यभागौ हूयेते । तयोरेव दक्षिणोत्तरपार्श्वयोर्मध्येऽन्येऽपि यागा अनुष्ठीयन्ते । तन्मध्यम्—आवापस्थानमिति कथ्यते । तत्राहुतिप्रक्षेपः कर्तव्यः । प्रतिदिनं यदग्निहोत्रं हूयते तत्र प्रातः सायं चाहुतिद्वयम् । तत्र प्रातः सूर्याय स्वाहा प्रजापतये स्वाहा । इति मन्त्राभ्यामाहुतिद्वयम् । सायम्-अग्नये स्वाहा, प्रजापतये स्वाहा' इति मन्त्राभ्यामाहुतिद्वयम् । एवं चाग्निहोत्र आहुतिद्वयम् । त्रित्वे बहुत्वं संपन्नमिति न्यायात् त्रिप्रभृतिषु बहुवचनस्य प्राप्तिस्तथा च कथमत्र मन्त्रे 'आहुतीः' इति बहुवचनप्रयोग इति शङ्कां निराकर्तुमाह-**अनेकाहःप्रयोगापेक्षयेति** । अनेकेष्वहःसु यदनुष्ठानं तदपेक्षया बहुवचनप्रयोगः । एकस्मिन्नहनि सायंप्रातस्तन आहुतयश्चतस्रो भवन्ति तदपेक्षयापि बहुवचनप्रयोगः संगच्छते । **विपत्तय इति** । दर्शपौर्णमासचातुर्मास्येष्ट्यादीनां यथाकालमनुष्ठानाभावो दुरनुष्ठानं वा विपत्तय इत्यर्थः ॥ २ ॥

**अग्निहोत्रिभिरवश्यकर्तव्यत्वादिति** । यद्यपि दर्शः अग्निहोत्रस्याङ्गं न तेन दर्शाभावो न विपत्तिस्तथापि न तत् अग्निहोत्रिभिरवश्यं कर्तव्यं तेन तद्दर्शे लक्षणयाग्निहोत्रस्यैव विपत्तिभूतं गण्यते । **अग्निहोत्रिसंबन्धीति** । अग्निहोत्रिणो यदवश्यकर्तव्यं दर्शं तत्तत्संबन्धिनोऽग्निहो-

षणत्वं द्रष्टव्यम् । अग्निहोत्राङ्गत्वस्याविशिष्टत्वात् । अपौर्णमासं पौर्णमासकर्मवर्जितम् । अचातुर्मास्यं चातुर्मास्यकर्मवर्जितम् । अनाग्रयणमाग्रयणं शरदादिषु कर्तव्यं तच्च न क्रियते यस्य तत्तथा । अतिथिवर्जितं चातिथिपूजनं चाहन्यहन्यक्रियमाणं यस्य । स्वयं सम्यगग्निहोत्रकालेऽहुतम् । अदर्शादिवदवैश्वदेवं वैश्वदेवकर्मवर्जितम् । हूयमानमप्याविधिना हुतं न यथाहुतमित्येतत् । एवं दुःसंपादितमसंपादितमग्निहोत्राद्युपलक्षितं कर्म किं करोतीत्युच्यते-आसप्तमान्सप्तमसहितांस्तस्य कर्तुर्लोकान्हिनास्ति हिनस्तीवायासमात्रफलत्वात् । सम्यक्क्रियमाणेषु हि कर्मसु कर्मपरिणामानुरूप्येण भूरादयः सत्यान्ताः सप्त लोकाः फलं प्राप्तव्यम् । ते लोका एवंभूतेनाग्निहोत्रादिकर्मणा त्वप्राप्यत्वाद्धिंस्यन्त इव, आयासमात्रं त्वव्यभिचारीत्यतो हिनस्तीत्युच्यते । पिण्डदानाद्यनुग्रहेण वा संबध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः सप्त लोका उक्तप्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्त इत्युच्यते ॥ ३ ॥

> काली कराली च मनोजवा च
> सुलोहिता या च सुधूम्रवर्णा ।
> स्फुलिंगिनी विश्वरुची च देवी
> लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥

---

त्रस्य विशेषणमिव जायते । **इत्येतदिति** । इदं तात्पर्यमित्यर्थः । पौर्णमासकर्म—पौर्णमासेष्टिः चातुर्मास्यं-चातुर्मास्ययागः । आग्रयणं-नवान्नेन कर्तव्यं कर्म । **अदर्शादिवदिति** । यथा दर्शमग्निहोत्रस्यानंगमपि अग्निहोत्रिभिरवश्यं कर्तव्यं तेन लक्षणयाग्निहोत्राङ्गं भवति तथैव वैश्वदेवकर्म अग्निहोत्रस्यानंगमपि अग्निहोत्रिभिरवश्यं कर्तव्यं तेनाग्निहोत्रांगं भवति । **दुःसंपादितमिति** । अशास्त्रीयरीत्या संपादितमित्यर्थः । अग्निहोत्रादिसर्वेषामनुक्तकर्मणामुपलक्षणमित्याह—**अग्निहोत्राद्युपलक्षितमिति** । हिनस्तीव—नाशयतीव । **आयासमात्रफलत्वादिति** । दुःसंपादितासंपादितकर्मफलं परिश्रमातिरिक्तं न किंचिदित्यर्थः । कर्मपरिणामानुरूप्येण-कर्मपरिणामानुरूपम् । **सत्यान्ता इति** । १ भूः २ भुवः ३ स्वः ४ जनः ५ महः ६तपः ७ सत्यमिति सप्त लोकाः । **हिंस्यन्त इवेति** । अप्राप्तिरेव हिंसा । **अव्यभिचारीति** । दुःसंपादितेऽपि कर्माणि श्रमो भवत्येव । एवंच फलाभावेऽपि श्रमस्तु भवति । अव्यभिचारी—नित्यः । **पिण्डदानाद्यनुग्रहेणेति** । आदिपदेन ग्रासदानद्वारा पोषणं ग्राह्यम् । तथाच पिण्डदानेन त्रयाणां पितृपितामहप्रपितामहानामुपकारः । ग्रासादिपोषणेन त्रयाणां पुत्रपौत्रप्रपौत्राणामुपकारः । एवं चैते षट् स्वयं यजमानश्चेति सप्त लोका अग्निहोत्रादिनोपक्रियन्ते । अन्यथा तदुच्छेदो भवति । **उच्यत इति** । फलाभावो हिंसैव । तेन हिनस्तीत्युच्यते ॥ ३ ॥

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना दहनस्य जिह्वाः । काल्याद्या विश्वरुच्यन्ता लेलायमाना अग्नेर्हविराहुतिग्रसनार्था एताः किल सप्त जिह्वाः ॥४॥

**एतेषु यश्चरते भ्राजमानेषु**
**यथाकालं चाहुतयो ह्याददायन् ।**
**तं नयन्त्येताः सूर्यस्य रश्मयो**
**यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥**

एतेष्वग्निजिह्वाभेदेषु योऽग्निहोत्री चरते कर्माचरत्यग्निहोत्रादिकं भ्राजमानेषु दीप्यमानेषु । यथाकालं च यस्य कर्मणो यः कालस्तं कालमनतिक्रम्य यथाकालं यजमानमाददायन्नाददाना आहुतयो यजमानेन निर्वर्तितास्तं नयन्ति प्रापयन्त्येता आहुतयो या इमा अनेन निर्वर्तिताः सूर्यस्य रश्मयो भूत्वा रश्मिद्वारैरित्यर्थः । यत्र यस्मिन्स्वर्गे देवानां पतिरिन्द्र एकः सर्वानुपर्यधिवसतीत्यधिवासः ॥ ५ ॥

कथम्—

**एह्येहीति तमाहुतयः सुवर्चसः**
**सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।**
**प्रियां वाचमभिवदन्त्योऽर्चयन्त्य**
**एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥**

सूर्यस्य रश्मिभिर्यजमानं वहन्तीत्युच्यत एह्येहीत्याह्वयन्त्यस्तं यजमानम् आहुतयः सुवर्चसो दीप्तिमत्यः । किंच प्रियामिष्टां वाचं स्तुत्यादिलक्षणामभिवदन्त्य उच्चारयन्त्योऽर्चयन्त्यः पूजयन्त्यश्चैष वो युष्माकं

---

विशेषविध्यर्थमग्नेः सप्त जिह्वा अनुवदति-**कालीत्यादि** । **दहनस्येति** । अग्नेरित्यर्थः । आहुतिग्रसनं–आहुतिभक्षणम् ॥ ४ ॥

**एतेष्विति । चरत इति ।** आत्मनः सत्त्वशुद्ध्यर्थं कर्म करोतीत्यर्थः । निर्वर्तिताः-संपादिताः। **आहुतय इति** । आहुतयो रश्मिरूपेण यजमानं वहन्तीति संबंधः । **भूत्वेति** भूत्वा पदं भाष्येऽध्याह्रियते । **रश्मिद्वारैरिति** । इत्थंभूते तृतीया । रश्मिरूपेण रवि-रश्मिरूपेण । रविरश्मिरूपाः सत्यो वहन्तीत्यर्थः । आधिवासः–सर्वाधिकारी । ॥ ५ ॥

**एह्येहीतीति** । हे यजमान । आगच्छागच्छेत्याहुतयो ह्वयन्ति । **स्तुत्यादिलक्षणामिति** । धन्यस्त्वमित्यादिरूपां यजमानस्य स्तुतिं कृत्वा तमभिनन्द्यैष तव सुक-

पुण्यः सुकृतः । ब्रह्मलोकः फलरूपः । एवं प्रियां वाचमभिवदन्त्यो वहन्तीत्यर्थः । ब्रह्मलोकः स्वर्गः प्रकरणात् ॥६॥

एतच्च ज्ञानरहितं कर्मैतावत्फलमविद्याकामकर्मकार्यमतोऽसारं दुःखमूलमिति निन्द्यते ।

**प्लवा ह्येते अदृढा यज्ञरूपा**
**अष्टादशोक्तमवरं येषु कर्म ।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा**
**जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥**

प्लवा विनाशिन इत्यर्थः । हि यस्मादेतेऽदृढा अस्थिरा यज्ञरूपा यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्तका अष्टादशाष्टादशसंख्याकाः षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादश । एतदाश्रयं कर्मोक्तं कथितं शास्त्रेण येष्वष्टादशस्ववरं केवलं ज्ञानवर्जितं कर्म । अतस्तेषामवरकर्माश्रयाणामष्टादशानामदृढतया प्लवत्वात्प्लवते सह फलेन तत्साध्यं कर्म । कुण्डविनाशादिव क्षीरदध्यादीनां तत्स्थानां नाशः । यत एवमेतत्कर्म श्रेयः श्रेयःसाधनमिति येऽभिनन्दन्त्यभिहृष्यन्त्यविवेकिनो मूढा अतस्ते जरां च मृत्युं च जरामृत्युं किंचित्कालं स्वर्गे स्थित्वा पुनरेवापि यन्ति भूयोऽपि गच्छन्ति ॥ ७ ॥

---

मजनितः स्वर्ग इति कथ्यते । व इति । आदरार्थे बहुवचनम् । **सुकृत इति** । सुकृतं पुण्यं तद्रूपस्तन्मय इत्यर्थः । अत्र ब्रम्हलोकपदेन स्वर्ग एव लोको ग्राह्यो न मोक्षरूपः । यतोऽत्र यज्ञकर्मणः फलं प्रदर्श्यते । तस्यैवात्र प्रकरणं प्रचलति । मोक्षस्तु यज्ञकर्मणः फलं भवितुं नार्हति तदाह-**प्रकरणादिति** ॥ ६ ॥

**एतच्चेति** । अग्निहोत्रादिकं सर्वं यज्ञकर्म ज्ञानरहितमविद्याजन्यं तेन दुःखमूलत्वादसारत्वाच्च त्याज्यम् । एतावत्फलं-स्वर्गात्मकफलम् । **निन्द्यत इति** । एवं निन्दया श्रोतृणां तादृश्यकर्मसु वैराग्यं स्यादित्यर्थः । प्लवाः-अल्पद्रोण्यः । **यज्ञरूपा इति** । यदाश्रयतया यज्ञो निरूप्यते । तदाह-**यज्ञनिर्वर्तका इति** । पत्न्यादिभिर्यज्ञः संपाद्यत इत्यर्थः । एतदाश्रयं-एतत्साध्यम् । **अवरमिति** । निकृष्टं ज्ञानरहितमेवेत्यर्थः । प्लवते-विनश्यति । फलेन स्वर्गेण । तत्साध्यं-अष्टादशसाध्यं यज्ञकर्म । **कुण्डविनाशादिवेति** । क्षीरदध्यादिपात्रं कुण्डमित्यभिधीयते । यथा कुण्डनाशे तद्गतं क्षीरदध्यादि भूमिगतं भूत्वा विनश्यति तद्वत्पूर्वोक्ताष्टादशानां प्लवसमानां नाशे यज्ञीयं कर्म नश्यति तद्द्वाराच स्वर्गफलस्यापि नाशः । **मूढा इति** । विनाशि कर्म श्रेयःसाधनमिति मतिरेव मूढता । **जरामृत्युमिति** । जरासहितो मृत्युर्जरामृत्युरिति मध्यमपदलोपी समासः । **किंचित्कालमिति** । क्षीणे पुण्ये मृत्युलोकं विशन्तीति भगवदुक्तेः ॥७॥

किंच—

अविद्यायामन्तरे वर्तमानाः
स्वयं धीराः पण्डितं मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

अविद्यायामन्तरे मध्ये वर्तमाना अविवेकप्रायाः स्वयं वयमेव धीरा धीमन्तः पण्डिता विदितवेदितव्याश्चेति मन्यमाना आत्मानं संभावयन्तस्ते च जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमाना भृशं पीड्यमानाः परियन्ति विभ्रमन्ति मूढाः । दर्शनवर्जितत्वादन्धेनैवाचक्षुष्केणैव नीयमानाः प्रदर्श्यमानमार्गा यथा लोकेऽन्धा अक्षिरहिता गर्तकण्टकादौ पतन्ति तद्वत्॥८॥

किंच—

अविद्यायां बहुधा वर्तमाना
वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात्ते-
नातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

अविद्यायां बहुधा बहुप्रकारं वर्तमाना वयमेव कृतार्थाः कृतप्रयोजना इत्येवमभिमन्यन्त्यभिमानं कुर्वन्ति बाला अज्ञानिनः । यद्यस्मादेवं कर्मिणो न प्रवेदयन्ति तत्त्वं न जानन्ति रागात्कर्मफलरागाभिभवनिमित्तं तेन कारणेनातुरा दुःखार्ताः सन्तः क्षीणलोकाः क्षीणकर्मफलाः स्वर्गलोकाच्च्यवन्ते ॥९॥

---

**अविद्यायामन्तर इति** । अविद्यारूपे आवरणे विद्यमानाः । **स्वयमिति** । गुरूपदेशानपेक्षया स्वाभिप्रायेणैवेत्यर्थः । **अविवेकप्राया इति** । बहुशो विवेकाभाववन्तः । **विदितवेदितव्या इति** । वेदितव्यं कर्मज्ञानादि सर्वं ज्ञेयं विदितं यैः । **अनेकानर्थव्रातैरिति** । अनेके च तेऽनर्थाः संकटानि तेषां व्राताः समूहाः । विभ्रमे हेतुमाह-**दर्शनवर्जितत्वादिति** । दर्शनं-ज्ञानम् । **गर्तकण्टकादाविति** । गर्तं-भूविवरे । कण्टकादौ संकट इत्यर्थः । अन्यथापि तृतीयान्तमन्धेनेति पदं योजयितुं शक्यम् । तथाहि-अज्ञा अन्धेनैवाचेतनेन प्रकृतेन कर्मणा परियन्ति विभ्रमन्ति । यथा अन्धा नीयमाना विभ्रमन्तीति ॥ ८ ॥

**किंचेति** । **कृतप्रयोजना इति** । कृतं सम्पादितं, ऐहिकमामुष्मिकं च प्रयोजनं यैरित्यर्थः । **कर्मफलरागेत्यादि** । कर्मफलं स्वर्गः । तद्रागः-तत्प्रेमासक्तिः स एवाभिभवः पराजयस्तन्निमित्तम् । स्वर्गादिफलासक्तिरेव पराजय इत्यर्थः । **च्यवन्त इति** । क्षीणे पुण्ये स्वर्गात्पतन्तीति भावः ॥ ९ ॥

इष्टापूर्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वे-
मं लोकं हीनतरं वा विशन्ति ॥१०॥

इष्टापूर्तम् । इष्टं यागादि श्रौतं कर्म । पूर्तं स्मार्तं वापीकूपतडागादि कर्म । मन्यमाना एतदेवातिशयेन पुरुषार्थसाधनं वरिष्ठं प्रधानमिति चिन्तयन्तोऽन्यदात्मज्ञानाख्यं श्रेयःसाधनं न वेदयन्ते न जानन्ति प्रमूढाः पुत्रपशुबान्धवादिषु प्रमत्ततया मूढास्ते च नाकस्य स्वर्गस्य पृष्ठ उपरिस्थाने सुकृते भोगायतनेऽनुभूत्वानुभूय कर्मफलं पुनरिमं लोकं मानुषमस्माद्धीनतरं वा तिर्यङ्नरकादिलक्षणं यथाकर्मशेषं विशन्ति ॥ १० ॥

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥११॥

ये पुनस्तद्विपरीतज्ञानयुक्ता वानप्रस्थाः संन्यासिनश्च तपःश्रद्धे हि तपः स्वाश्रमविहितं कर्म । श्रद्धा हिरण्यगर्भादिविषया विद्या । ते तपःश्रद्धे

---

**इष्टापूर्तमिति** । आयुर्वै घृतमिति श्रुतौ यथायुःशब्द आयुःसाधनं घृतमित्यर्थे पर्यवसन्नस्तद्वत् अत्र श्रेयःपदं लक्षणया श्रेयःसाधनमित्यर्थे पर्यवसन्नम् । श्रेयःसाधनं, आत्मज्ञानमेव । **नाकस्येति** । न कम् अकम् अविद्यमानम् अकं यस्मिन् इति विग्रहः । कं सुखं तदभावोऽकं दुःखं तद्यत्र न विद्यतेऽसौ स्वर्गलोको नाकपदवाच्यः । केवलसुखमयत्वात् । लोकपदेन मानुषं जन्म गृह्यते तदाह-**मानुषमिति** । मानुषाद्धीनतरं जन्म तिर्यग्नरकादि । तिर्यञ्चः—पशुपक्षिणः । नरकपदेन नरकस्थकीटादीनां ग्रहणम् । **यथाकर्मशेषमिति** । यस्य यस्य मरणसमये यद्यत्कर्मावशिष्यते तदनुसारं जन्मप्राप्तिः । त्रिविधा हि स्थितिः । ये निष्कामकर्मानुतिष्ठन्ति ते उत्तरमार्गेण क्रममुक्तिं गच्छन्ति । य इष्टापूर्तादिकारिणस्ते यथाकर्मफलं स्वर्गं लोकमुपभुज्यावशेषेण मनुष्यादिजन्म लभन्ते । ततोऽन्ये 'अथैतयोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमिति श्रुत्या य उत्तरेण दक्षिणेन च मार्गेण न गच्छन्ति ते तिर्यगादियोनिं पुनः पुनर्गच्छन्ति ॥ १० ॥

**तपःश्रद्धे इति** । पूर्वग्रन्थेन केवलकर्मिणां फलमुक्तम् । अत्र सगुणब्रह्मज्ञानसहिताश्रमकर्मिणां वानप्रस्थसंन्यासिसाधुगृहस्थानामपि फलं संसारान्तर्गतमेवेति दर्शयति—**ये पुनस्तद्विपरीतज्ञानयुक्ता इति** । अत्र अन्वयक्रमेण व्याख्यानम् । भाष्यकृतां भग-

उपवसन्ति सेवन्तेऽरण्ये वर्तमानाः सन्तः । शान्ता उपरतकरणग्रामाः । विद्वांसो गृहस्थाश्च ज्ञानप्रधाना इत्यर्थः । भैक्ष्यचर्यां चरन्तः परिग्रहाभावादुपवसन्त्यरण्य इति संबन्धः । सूर्यद्वारेण सूर्योपलक्षितेनोत्तरेण पथा ते विरजा विरजसः क्षीणपुण्यपापकर्माणः सन्त इत्यर्थः । प्रयान्ति प्रकर्षेण यान्ति यत्र यस्मिन्सत्यलोकादावमृतः स पुरुषः प्रथमजो हिरण्यगर्भो ह्यव्ययात्माव्ययस्वभावो यावत्संसारस्थायी । एतदन्तास्तु संसारगतयोऽपरविद्यागम्याः । ननु–एतं मोक्षमिच्छन्ति केचित् । न । "इहैव सर्वे प्रविलीयन्ति कामाः" (मुं.३।२।२) "ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति" (मुं.३।२।५) इत्यादिश्रुतिभ्योऽप्रकरणाच्च । अपरविद्याप्रकरणे हि प्रवृत्ते न ह्यकस्मान्मोक्षप्रसङ्गोऽस्ति । विरजस्त्वं त्वापेक्षिकम् । समस्तमपर विद्याकार्यं साध्यसाधनलक्षणं क्रियाकारकफलभेदभिन्नं द्वैतम् एतावदेव यद्धिरण्यग-

---

वत्पूज्यपादानामियं परिपाटी यत्ते मूलक्रमेण व्याख्यान्ति नान्वयक्रमेण । परन्तु क्वचित्स्थलेऽन्वयक्रमेण व्याख्यानं दृश्यते । तथैतत् स्थलम् । अत्र 'ये' इत्यस्य प्रथमं व्याख्यानम् । अरण्ये–स्त्रीजनासंकीर्णे देशे । **उपरतकरणग्रामा इति** । करणग्रामः-इन्द्रियसमुदायः स उपरतो विषयविमुखो येषाम् । विषयवैराग्यप्राप्ता इत्यर्थः । ज्ञानप्रधानाः—उपासनाप्रधानाः । **विरजा इति** । अत्र रजःशब्दस्याकारान्तत्वं छान्दसम् । **यावत्संसारस्थायीति** । उत्तरमार्गगा उपासका अनेन संसारस्थितिपर्यन्तस्थायिना हिरण्यगर्भेण सह स्थित्वा प्रलयसमये मुच्यन्ते । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्युक्तेः । परस्य–हिरण्यगर्भस्य । कृतात्मानः-आत्मज्ञानवन्तः । **एतदन्ता इति** । हिरण्यगर्भसमीपगमनपर्यन्तमेवोपासकानां गतिः । अस्या अपि गतेर्विनाशस्तेनेयं गतिः संसारान्तर्गतैव । केचिदिदं हिरण्यगर्भसमीपगमनमेव मोक्ष इति वदन्ति तन्मतमसंगतमित्याह पूर्वोत्तरपक्षाभ्याम्-**नन्विति** । इहैव सर्व इत्यादिश्रुतिषु मुक्तानाम् अत्रैव सर्वकामप्रविलयः सर्वात्मभावश्च प्रदर्श्यते न विशिष्टहिरण्यगर्भदेशगमनम् । हिरण्यगर्भलोकप्राप्तिस्तु देशपरिच्छिन्नं फलम् । ततो मोक्ष इयं गतिश्च भिन्ना तेन तयोरैक्यमनुपपन्नम् । किंच प्रकरणभेदोऽपि । अपरविद्याप्रकरणे मोक्षप्रसंग एव नास्ति । तदाह—**अपरविद्याप्रकरण इति** । विरजस्त्वं मुक्तलिङ्गमिति चेन्न । विरजस्त्वमत्र यद्वर्ण्यते तस्य सापेक्षत्वात् । अयं भावः । विरजस्त्वं क्षीणपुण्यपापकर्मत्वं यदत्र वर्ण्यते तदज्ञानिगृहस्थापेक्षया । अयमुपासकोऽज्ञानिगृहस्थापेक्षया क्षीणपुण्यपापः । न तु सर्वशः पुण्यपापयोः क्षीणत्वम् । मुख्यं क्षीणपुण्यपापत्वं तु 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति भगवदुक्त्या परमात्मज्ञानिनि मुक्त एव संभवति तदाह-**विरजस्त्वं त्विति** । एतावत्-एतत्परिमाणकम् । **हिरण्यगर्भप्राप्त्यवसानामिति** । हिरण्यगर्भप्राप्तिपर्यन्तं द्वैतम् । **ब्रह्मेति** । ब्रह्मा-चतुर्मुखः ।

भप्राप्त्यवसानम् । तथा च मनुनोक्तं स्थावराद्यां संसारगतिमनुक्रामता—

" ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च ।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः " (म.स्मृ.१२-५०) इति ११

अथेदानीमस्मात्साध्यसाधनरूपात्सर्वस्मात्संसाराद्विरक्तस्य परस्यां विद्यायामधिकारप्रदर्शनार्थमिदमुच्यते—

**परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो**
**निर्वेदमायान्नास्त्यकृतः कृतेन ।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छे-**
**त्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥**

परीक्ष्य यदेतदृग्वेदाद्यपरविद्याविषयं स्वाभाविकाविद्याकामकर्मदोषवत्पुरुषानुष्ठेयमविद्यादिदोषवन्तमेव पुरुषं प्रति विहितत्वात्तदनुष्ठानकार्यभूताश्च लोका ये दक्षिणोत्तरमार्गलक्षणाः फलभूताः, ये च विहिताकरणप्रतिषेधातिक्रमदोषसाध्या नरकतिर्यक्प्रेतलक्षणास्तानेतान्परीक्ष्य प्रत्यक्षानुमानोपमानागमैः सर्वतो याथात्म्येनावधार्य लोकान्संसारगतिभूतानव्यक्ता-

---

विश्वसृजः—मरीचिप्रभृतयः प्रजापतयः । धर्मः—यमः । महान्-सूत्रात्मा । अव्यक्तं त्रिगुणात्मिका प्रकृतिः । **सात्त्विकीमिति** । सत्त्वपरिणामज्ञानसहितकर्मफलभूतामित्यर्थः ॥ ११ ॥

**अथेदानीमिति** । दक्षिणमार्गे साध्यं स्वर्गः साधनं यज्ञः । उत्तरमार्गे साध्यं हिरण्यगर्भप्राप्तिः । साधनं-सगुणब्रह्मोपासना । द्विविधमपि साध्यं साधनं च संसाररूपमेव ततो विरक्तस्यैव पराविद्यायामधिकारः ।

**परीक्ष्येति** । ऋग्वेदाद्यपरविद्याविषयं कर्माविद्याजन्यकामकर्मदोषघटितेन पुरुषेणानुष्ठेयं यतस्तादृशदोषवन्तं पुरुषमधिकृत्यैव तद्विहितम् । तदनुष्ठानेन यत्फलं दक्षिणोत्तरमार्गभूतं तत् परीक्षणीयम् । लौकिकफलं पुत्रादिप्राप्तिरूपमपि परीक्षणीयम् । तथा 'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ' इति स्मृतेर्विहितस्य संध्यावन्दनादेरकरणे 'न कलञ्जं भक्षयेत् ' इति प्रतिषेधस्यातिक्रमेच पातित्यं तन्मूलकं नरकतिर्यक्प्रेतजन्म तदपि कार्यकारणरूपं परीक्षणीयम् । ये दक्षिणोत्तरमार्गाभ्यां न गच्छन्ति तेषां तिर्यगादिजन्मेति दशममन्त्रव्याख्यायां प्रतिपादितम् । **स्वाभाविकीत्यादि** । स्वाभाविकी या अविद्या तज्जन्यौ कामकर्मदोषौ तद्युक्तेन पुरुषेणानुष्ठेयम् । **तदनुष्ठानेत्यादि** । तस्य अपरविद्यागतविधेरनुष्ठानम् । तत्कार्यभूतास्तत्फलभूताः । **नरकेत्यादि** । नरकपदेन नारकजन्तूनां ग्रहणम् । तिर्यञ्चः पशुपक्ष्यादयः । तिरः-वक्रतया अञ्चन्ति-गच्छन्तीति व्युत्पत्त्या । प्रेताः-पिशाचयक्षादयः । **प्रत्यक्षानुमानोपमानाग-**

दिस्थावरान्तान्व्याकृताव्याकृतलक्षणान्बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्ताननेकानर्थशतसहस्रसंकुलान्कदलीगर्भवदसारान्मायामरीच्युदकगन्धर्वनगराकारस्वप्नजलबुद्बुदफेनसमान्प्रतिक्षणप्रध्वंसान्पृष्ठतः कृत्वा, अविद्याकामदोषप्रवर्तितक-

---

**मेरिति**। परीक्षासाधनानि चत्वारि। लौकिकफलस्य पुत्रादेर्नाशः प्रत्यक्षप्रमाणेनैव ज्ञायते। आमुष्मिकस्य स्वर्गस्य नाशस्तु-अनुमानोपमानशाब्दप्रमाणगम्यः। तथाहि स्वर्गः, अनित्यः, जन्यत्वात्, यथा घटः। इत्यनुमानम्। तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते। इति श्रुतावुपमानपूर्वकमामुष्मिकस्य स्वर्गस्य नाशो बोधितस्तेनोपमानमागमश्चेति प्रमाणद्वयमुपयुक्तम्। **अवधार्येति**। एवं प्रमाणचतुष्टयेन सर्वशो याथात्म्येन-यथास्वरूपमवधार्य निश्चित्येत्यर्थः। **लोकानिति**। अस्यैव विशेषणानि अग्रे। मनुस्मृतौ प्रथमाध्याये-यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्। तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते॥ १।११॥ इति एकादशश्लोकमारभ्य-एवमेतैरिदं सर्वं मन्नियोगान्महात्मभिः। यथाकर्म तपोयोगात्सृष्टं स्थावरजङ्गमम्॥ १॥ ४१॥ इत्येकचत्वारिंशच्छ्लोकपर्यन्तमव्यक्तादिस्थावरपर्यन्तं सृष्टिरुक्ता। **संसारगतिभूतानिति**। एतदन्तास्तु गतयो ब्रह्माद्याः समुदाहृताः। घोरेऽस्मिन्भूतसंसारे नित्यं सततयायिनि॥ ५०॥ इति मनुस्मृतौ प्रथमाध्यायोक्तेः। **व्याकृताव्याकृतलक्षणानिति**। अव्याकृतं-अव्यक्तं, व्याकृतं-अव्यक्तोत्पादितपुरुषप्रभृति सर्वं स्थावरजङ्गमात्मकम्। **बीजांकुरवदिति**। इदमस्य न्यायस्य स्वरूपम्। बीजमंकुरमुत्पादयति अंकुरश्च फलोत्पत्तिद्वारा पुनर्बीजमुत्पादयति तत्पुनरंकुरमिति। एवमितरेतरोत्पत्तिनिमित्ता लोकाः। तथाहि शरीरे सति कामकर्मादयो भवन्ति। कामकर्मादिभिः शरीरं जायते ततः पुनः कामकर्मादयः। **अनेकानर्थेत्यादि**। अनन्तानर्थव्याप्तानित्यर्थः। **कदलीगर्भवदिति**। यथा कदली केवलं त्वक्संघरूपा। सर्वासां त्वचामपाकरणे काण्डादिकं न किमपि कदलीगर्भेऽवशिष्यते तद्वत् लोकानां परीक्ष्य विवेचने न किंचित्सारभूतं समुपलभ्यते। **मायामरीचीत्यादि**। माया-इन्द्रजालम्। मरीच्युदकं-मृगजलम्। तद्धि वालुकामयप्रदेशे सूर्यरश्मिसंसर्गात्प्रतीयतेऽतो मरीच्युदकमिति कथ्यते। मृगास्तत्र जलबुद्ध्या गच्छन्ति। तेन मृगजलमित्यभिधीयते। गन्धर्वनगरम्-सायंकाल आकाशे विचित्रवर्णा नगराकारेण प्रतीयन्तेऽतो गन्धर्वाणामाकाशस्थानामिदं नगरमिति भ्रमः। स्वप्नपदेन तद्गता भासमानाः पदार्था गृह्यन्ते। जलबुद्बुदाः—वातेन जले जायमाना आकारा जलरूपा अपि भिन्नाः प्रतीयन्ते। तथैव जलफेनः। इमे मायामरीच्यादयो यथा न सत्यस्वरूपाः किन्तु भासमानस्वरूपास्तथैवेमे लोका भासमानस्वरूपाः। **प्रतिक्षणप्रध्वंसानिति**। स्वरूपज्ञानक्षणे मायादिपदार्थानां प्रध्वंसो भवतीति प्रतिक्षणप्रध्वंसत्वम्। प्रतिक्षणमित्यस्य प्रतिज्ञानक्षणमित्यर्थः। **पृष्ठतः कृत्वेति**। उपेक्ष्येत्यर्थः। उपेक्षायां बीजमाह-**अविद्येत्यादि**। यत इमे लोका अविद्याजन्यकामदोषप्रेरित-

मैचितान्धर्माधर्मनिर्वर्तितानित्येतत् । ब्राह्मणो ब्राह्मणस्यैव विशेषतोऽधिकारः सर्वत्यागेन ब्रह्मविद्यायामिति ब्राह्मणग्रहणम् । परीक्ष्य लोकान्किं कुर्यादित्युच्यते—निर्वेदं निःपूर्वो विदिरत्र वैराग्यार्थे वैराग्यमायात्कुर्यादित्येतत् । स वैराग्यप्रकारः प्रदर्श्यते । इह संसारे नास्ति कश्चिदप्यकृतः पदार्थः । सर्व एव हि लोकाः कर्मचिताः कर्मकृतत्वाच्चानित्याः । न नित्यं किंचिदस्तीत्यभिप्रायः । सर्वं तु कर्मानित्यस्यैव साधनम् । यस्माच्चतुर्विधमेव हि सर्वं कर्म कार्यम् १ उत्पाद्यं २ आप्यं ३ संस्कार्यं ४ विकार्यं वा । नातःपरं कर्मणो विषयोऽस्ति । अहं च नित्येनामृतेनाभयेन कूटस्थेनाचलेन ध्रुवेणार्थेनार्थी न तद्विपरीतेन । अतः किं कृतेन कर्मणायासबहुलेनानर्थसाधनेनेत्येवं निर्विण्णोऽभयं शिवमकृतं नित्यं पदं यत्तद्विज्ञानार्थं विशेषेणाधिगमार्थं स निर्विण्णो ब्राह्मणो गुरुमेवाचार्यं शमदमादिसंपन्नमभिगच्छेत् । शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्यादित्येतद्गुरुमेवेत्यवधारणफलम् । समित्पाणिः समिद्भारगृहीतहस्तः श्रोत्रियमध्ययनश्रुतार्थसंपन्नं ब्रह्मनिष्ठं हित्वा सर्व-

---

कर्मसंपादितास्तथा तादृशपुण्यापुण्यसंपादिता अत उपेक्ष्याः । तन्मूलभूताविद्याया निःसारत्वात् । नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता नित्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्य इति स्मृतेः सर्वत्यागपूर्वकं ब्रह्मविद्या ब्राह्मणस्यैव संभवति नान्यस्येत्याह—**ब्राह्मणस्यैवेति** । परीक्षणानन्तरं निर्वेदमायादिति विधिः । **इहेति** । इहेति पदाध्याहारः । अकृतः—नित्यः । कर्मचितः—कर्मसंपादितः । कार्यम्—अनित्यम् । सर्वमनित्यं कर्म चतुःप्रकारकमेव । अयमर्थः । १ उत्पत्तिः २ आप्तिः ३ संस्कृतिः ४ विकृतिः । इति चतुर्विधक्रियात्मकमेव कर्म न पञ्चमः प्रकारः संभवति । १ तण्डुलानोदनं पचति । इति उत्पाद्यं कर्म । २ देवदत्तो ग्रामं गच्छतीति आप्यं प्राप्यं कर्म । ३ व्रीहीनवहन्ति । इति व्रीहिकण्डनात्मकं संस्कार्यं कर्म । ४ तप्ते पयसि दध्यानयति । इति विकार्यं कर्म । **कूटस्थेनेति** । कूटं गिरिशृंगं तदिव तिष्ठतीति । गिरिशृंगवदचलेन स्पन्दरहितेन । ध्रुवेण प्रयत्नरहितेन । **अर्थीति** । मया कूटस्थादिविशेषणविशिष्टं वस्त्वपेक्ष्यते । **किमिति** । किमिति पदं मन्त्रे नास्ति अधिकमध्याह्रियते । आयासबहुलेन कर्मणा किं फलं न किमपीत्यर्थः । निर्विण्णः—वैराग्यमाप्तः । **अवधारणफलमिति** । अवधारणं निश्चयद्योतक एवकारः तस्य फलं प्रयोजनम् । शास्त्रज्ञेनापि शिष्येण स्वयमुत्प्रेक्ष्य ब्रह्मज्ञानं न संपाद्यम् । किन्तु गुरूपदेशद्वारैव तत्प्राप्तव्यमित्यर्थः । **समिद्भारेत्यादि** । अनेन विनयपूर्वकं गुरुसमीपे गन्तव्यमिति द्योत्यते । समित्पाणित्वं पुनरुपनयनार्थम् । **श्रोत्रियमिति** । श्रोत्रियंश्छन्दोऽधीते (पा. सू. ५।२।८४) इति छन्दसः

कर्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठः। जपनिष्ठस्तपोनिष्ठ इति यद्वत्। न हि कर्मिणो ब्रह्मनिष्ठता संभवति कर्मात्मज्ञानयोर्विरोधात्। स तं गुरुं विधिवदुपसन्नः प्रसाद्य पृच्छेदक्षरं पुरुषं सत्यम्॥ १२॥

**तस्मै स विद्वानुपसन्नाय सम्यक्**
**प्रशान्तचित्ताय शमान्विताय।**
**येनाक्षरं पुरुषं वेद सत्यं**
**प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥ १३॥**

**इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डके द्वितीयः खण्डः॥**

**इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डकं समाप्तम्॥ १॥**

तस्मै स विद्वान्गुरुर्ब्रह्मविदुपसन्नायोपगताय। सम्यग्यथाशास्त्रमित्येतत्। प्रशान्तचित्तायोपरतदर्पादिदोषाय। शमान्विताय बाह्येन्द्रियोपरमेण च युक्ताय सर्वतो विरक्तायेत्येतत्। येन विज्ञानेन यया विद्यया परयाक्षरमद्रेश्यादिविशेषणं तदेवाक्षरं पुरुषशब्दवाच्यं पूर्णत्वात्पुरि शयनाच्च। सत्यं तदेव परमार्थस्वाभाव्यादव्ययम्। अक्षरं चाक्षरणादक्षत-

---

श्रोत्रभावो घंश्चप्रत्ययः। श्रुतार्थः–अधीतवेदस्यार्थः। तद्युक्तं गुरुम्। **यद्वदिति**। यथा जपनिष्ठः, तपोनिष्ठ इति जप एव निष्ठा नितरां स्थितिर्यस्य नान्यस्मिन् कर्मणि। तथा तपस्येव निष्ठा नान्यत्रेति जपतपोरूपकर्मणोः सातत्यं बोध्यते तद्वत् ब्रह्मण्येव तद्ध्यान एव नितरां स्थितिर्बोध्यत इत्यर्थः। **विरोधादिति**। कर्मात्मज्ञानयोः स्थितिगतिवत् तमः-प्रकाशवच्च विरोधः पूर्वमुक्तः। **गुरुमिति**। अत्रेत्थमवधेयम्। त्रिविधो हि गुरुरुत्तममध्यम-कनिष्ठभेदेन। १ श्रोत्रियत्वे सति ब्रह्मनिष्ठ उत्तमः। २ केवलं श्रोत्रियो मध्यमः। ३ केवलं ब्रह्मनिष्ठः कनिष्ठः। आद्यः शिष्यं शास्त्रीयरीत्या संशयनिर्मुक्तं कृत्वोद्धरति। स्वानुभव-द्वारा चोपकरोति तेन तस्योत्तमत्वम्। द्वितीयः शिष्यं पूर्ववत् संशयनिर्मुक्तं करोति। स्वानु-भवद्वारोपकारस्तु कर्तुं न शक्यः। तदा यदि शिष्यः पूर्णतया विमलचेतास्तर्हि स्वयमेव सि-ध्येत्। तेनास्य मध्यमत्वम्। तृतीयस्तु स्वयं ब्रह्मनिष्ठोऽपि श्रोत्रियत्वाभावात् शिष्यं शास्त्री-यरीत्या निर्मुक्तसंशयं कर्तुं न पारयति तेन शिष्योद्धारकर्मण्यनर्हत्वादस्य कनिष्ठं गुरुत्वम्। अत्र प्रथमो गुरुरुक्तस्तेन विशेषणद्वयं श्रोत्रियं ब्रह्मनिष्ठमिति। **पृच्छेदिति**। प्रश्ने कृते हि गुरोः सकाशाज्ज्ञानं लभ्यते। तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥ भ. गी. ४।३४ इति भगवदुक्तेः॥ १२॥

**यथाशास्त्रमिति**। समित्पाणिरित्यादिशास्त्रानुसारमित्यर्थः। **बाह्येन्द्रियोपरमेणेति**। चित्तमन्तरिन्द्रियम्। चक्षुरादीनि बहिरिन्द्रियाणि। **सत्यमिति**। अत्रापि अन्वय-

त्वादक्षयत्वाच्च वेद विजानाति तां ब्रह्मविद्यां तत्त्वतो यथावत्प्रोवाच प्रब्रूयादित्यर्थः । आचार्यस्याप्ययमेव नियमो यन्न्यायप्राप्तसच्छिष्यनिस्तारणमविद्यामहोदधेः ॥ १३ ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये प्रथममुण्डके द्वितीयः खण्डः ॥२॥

इति मुण्डकोपनिषद्भाष्ये प्रथममुण्डकं समाप्तम् ॥ १ ॥

अपरविद्यायाः सर्वं कार्यमुक्तम् । स च संसारो यत्सारो यस्मान्मूलादक्षरात्संभवति यस्मिंश्च प्रलीयते तदक्षरं पुरुषाख्यं सत्यम् । यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति तत्परस्या ब्रह्मविद्याया विषयः स वक्तव्य इत्युत्तरो ग्रन्थ आरभ्यते ।

**तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिंगाः**
**सहस्रशः प्रभवन्ते सरूपाः ।**
**तथाऽक्षराद्विविधाः सोम्य भावाः**
**प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥**

यदपराविद्याविषयं कर्मफललक्षणं सत्यं तदापेक्षिकम् । इदं तु परविद्याविषयं परमार्थसल्लक्षणत्वात् । तदेतत्सत्यं यथाभूतं विद्याविषयम् । अवि-

---

क्रमेण व्याख्यानम् । वेदशब्दात्पूर्वं सत्यमिति शब्दो व्याख्यातः । परमार्थस्वाभाव्यात्–सत्यस्वरूपत्वात् । **अक्षरमिति** । न क्षीयते न क्षरतीति वा अक्षरम् । **अक्षरणादिति** । अवयवान्यथाभावलक्षणपरिणामरहितत्वात् । **अक्षतत्वात्**–व्रणरहितत्वात् । अक्षयत्वात्–अशरीरत्वेन विकारशून्यत्वादित्यर्थः । अशू व्याप्ताविति धातोः सरन्प्रत्ययेऽश्नुत इति व्युत्पत्त्या अक्षरं व्यापकमित्यप्यर्थः । स चात्र भाष्ये न गृह्यते । अन्यत्र बहुश उदाहृतः । ब्रह्मविद्यां प्रब्रूयादिति गुरोरपि विधिः । तदाह–**आचार्यस्यापीति** । न्यायेन समिद्ग्रहणादिना प्राप्तोऽत एव सच्छिष्यस्तस्य समुद्रवद्गभीराया अविद्यायाः सकाशान्निस्तारणं गुरोरवश्यकर्तव्यमित्यर्थः ॥ १३ ॥

**इति श्रीमुण्डकोपनिषद्भाष्ये बालबोधिन्यां प्रथममुण्डके द्वितीयः खण्डः ॥२**

**इति मुण्डकोपनिषद्भाष्ये बालबोधिन्यां प्रथममुण्डकं समाप्तम् ॥**

पूर्वोत्तरसंगतिं प्रदर्शयितुमुक्तमनुवदति–**अपरविद्याया इति** । सः–अपरविद्याकार्यरूपः । **यत्सार इति** । यत् सारो दृढो मध्यभागो यस्य तत् । **आरभ्यत इति** । पूर्वमपरविद्याकार्यं संसाररूपं सविस्तरमुक्त्वाधुना तन्मूलभूतं अक्षरसत्यात्मकपुरुषं परविषयभूतं प्रतिपादयति यद्विज्ञाने सर्वविज्ञानं भवतीत्यर्थः । ननु प्रथममुण्डकद्वितीयखण्डप्रथममन्त्रे 'तदेतत्सत्यम्' इति कर्मण्यपि सत्यत्वं प्रतिपादितं तद्वदिदं सत्यं स्यात्तन्निराकरोति–**यद**-

द्याविषयत्वाच्चानृतमितरत् । अत्यन्तपरोक्षत्वात्कथं नाम प्रत्यक्षवत्सत्यमक्षरं प्रतिपद्येरन्निति दृष्टान्तमाह—यथा सुदीप्तात्सुष्ठु दीप्तादिद्धात्पावकादग्नेर्विस्फुलिङ्गा अग्न्यवयवाः सहस्रशोऽनेकशः प्रभवन्ते निर्गच्छन्ति सरूपा अग्निसलक्षणा एव, तथोक्तलक्षणादक्षराद्विविधा नानादेहोपाधिभेदमनुविधीयमानत्वाद्विविधा हे सोम्य भावा जीवा आकाशादिवद्घटादिपरिच्छिन्नाः सुषिरभेदा घटाद्युपाधिप्रभेदमनुभवन्ति । एवं नानानामरूपकृतदेहोपाधिप्रभवमनुप्रजायन्ते तत्र चैव तस्मिन्नेवाक्षरेऽपियन्ति देहोपाधिविलयमनुविलीयन्ते घटादिविलयमन्विव सुषिरभेदाः । यथाकाशस्य सुषिरभेदोत्पत्तिप्रलय-

---

**परविद्याविषयमिति** । कर्मफलं यत्सत्यत्वलक्षणं तद्घटपटाद्यपेक्षया । तथाहि यथा घटपटादयः प्रत्यक्षं विनाशिनो न तथेदं कर्मफलं यत इदं तदुपभोगपर्यन्तं तिष्ठति । इदं परविद्याविषयं सत्यं तु न तथा लाक्षणिकम् । यतोऽत्र परमार्थसतो वास्तवसत्यस्य लक्षणं घटते तेनात्यन्ताबाध्यमित्यर्थः । अपरविद्याविषयमित्यत्र विषीयते विशिष्यते विद्ययेनेति व्युत्पत्त्या विषयशब्दस्य वस्तुपरत्वान्नपुंसकलिंगत्वम् । **इतरदिति** । अपरविद्याविषयमित्यर्थः । **अत्यन्तपरोक्षत्वादिति** । केवलशास्त्रगम्यत्वादित्यर्थः । **प्रतिपद्येरन्निति** । अत्र मुमुक्षव इति कर्तृपदम् । साक्षात्काराधीनं कैवल्यं ततः कथं नाम मुमुक्षवः सत्यमक्षरं प्रत्यक्षवत्प्रतिपद्येरन्नित्यभिप्रेत्य श्रुतिर्जीवब्रह्मणोरेकत्वे दृष्टान्तमाह-**यथा सुदीप्तादिति** । यथा सुदीप्तः पावकःतदवयवास्तत्सजातीयाश्च विस्फुलिंगा अभिन्नास्तद्वद्ब्रह्माक्षररूपं सत उपाधिद्वारा भासमाना जीवाश्चाभिन्नाः । तेन जीवप्रत्यक्षे ब्रह्मणोऽपि तदैक्यात्प्रत्यक्षत्वम् । यथा घटावयवे प्रत्यक्षे घटस्य प्रत्यक्षत्वम् । अग्नेर्बहिर्देशस्थितत्वेन विस्फुलिंगेषु अग्न्यात्मकत्वेऽपि अग्न्यवयवत्वव्यवहारः। स्वतस्तु अग्न्यात्मत्वम् उष्णप्रकाशगुणवत्त्वोपलम्भात् । उपाधिद्वारोपलभ्यमानत्वात्सोपाधिकब्रह्मणो जीवत्वेन व्यवहारः । स्वतस्तु ब्रह्मात्मत्वं चिद्रूपत्वाविशेषात् । एवं च प्रत्यक्षमुपलभ्येत जीवब्रह्मणोरेकत्वं मुमुक्षुभिरित्यर्थः । अग्निसलक्षणाः- अग्निजातीयाः । **अनुविधीयमानत्वादिति** । तत्तदुपाधिमनुसृत्य भासमानत्वादित्यर्थः । हे सोम्य कोमलचित्त । इदं शौनकं प्रत्यंगिरसोक्तं संबोधनम् । उपाधिद्वारा प्रतिभासे दृष्टान्तमाह-**आकाशादिवदिति** । घटादिपरिच्छिन्नाः-घटगर्तादिगताः । सुषिरं बिलं तद्भेदास्तत्प्रकाराः । उपाधिप्रभेदं तत्तदुपाधिभेदम् । यथाकाशं घटमठादिगतच्छिद्रद्वारा घटाकाशः, मठाकाश इति संज्ञां लभते तद्वद्ब्रह्माक्षररूपं सत् विविधदेहोपाधिद्वारा देवदत्तादितत्तत्संज्ञां लभत इति । दार्ष्टान्तिके घटयति-**एवमिति** । नाम-देवदत्तादि । रूपं-शुक्लनीलादि । तत्कृतो देहोपाधीनां प्रभवो जन्म तदनु प्रजायन्ते उत्पद्यन्ते । अपियन्ति लीयन्ते । देहोपाधिविलयमनु-प्रारब्धवशाद् देहोपाधिनाशे सति । **सुषिरभेदा इति** । यथा विविधानि घटगर्तादिबिलानि घटनाशे नश्यन्ति तद्वत् । **सुषिरभेदोत्पत्तिप्रलयनिमित्तत्वमिति** । घटगतबिले आका-

निमित्तत्वं घटाद्युपाधिकृतमेव तद्वदक्षरस्यापि नामरूपकृतदेहोपाधिनिमित्तमेव जीवोत्पत्तिप्रलयनिमित्तत्वम् ॥ १ ॥

नामरूपबीजभूतादव्याकृताख्यात्स्वविकारापेक्षया परादक्षरात्परं यत्सर्वोपाधिभेदवर्जितमक्षरस्यैव स्वरूपमाकाशस्येव सर्वमूर्तिवर्जितं नेति नेतीत्यादिविशेषणं विवक्षन्नाह ।

**दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥**
**अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥**

दिव्यो द्योतनवान्स्वयंज्योतिष्ट्वात् । दिवि वा स्वात्मनि भवोऽलौकिको वा । हि यस्मादमूर्तः सर्वमूर्तिवर्जितः पुरुष पूर्णः पुरिशयो वा । सबाह्याभ्यन्तरः सह बाह्याभ्यन्तरेण वर्तत इति । अजो न जायते कुतश्चित्स्वतोऽन्यस्य जन्मनिमित्तस्य चाभावात् । यथा जलबुद्बुदादेर्वाय्वादिः ।

---

स्योत्पत्तिर्विनाशश्च घटकृत एव न वास्तवमुत्पत्तिर्विनाशो वाकाशस्येति । **तद्वदिति** । इदं तात्पर्यम् । यथा घटोत्पत्तौ जातायां तद्गतं सुषिरमुत्पद्यते ततस्तत्राकाशसत्तायामाकाशोत्पत्तिरित्यभिधीयते । यथा वा घटविनाशे जाते तद्गतसुषिरनाशेनाकाशाभावे आकाशनाश इत्यभिधीयते तथैव नामरूपद्वारा देहोपाधौ जाते तत्र ब्रह्मणः प्रादुर्भावे तदुपाधिमनु ब्रह्माक्षरमपि जायत इत्यभिधीयते तथैव च नामरूपनाशद्वारा देहोपाधौ विनष्टे ब्रह्मापि विनष्टमित्यभिधीयते । अयमेव जीवानामुत्पत्तिप्रलयक्रमः । स चोपाधिजन्यत्वात्प्रातिभासकः । न सत्यरूपः । तथा च जीवब्रह्मणोरैक्यात्प्रत्यक्षवत्सत्यमक्षरं प्रतिपद्येरन्मुमुक्षव इति ॥१॥

पूर्वमन्त्रे जीवब्रह्मणोरेकत्वासिध्यर्थं जीवोत्पत्तिप्रलयनिमित्तत्वमौपाधिकमुक्तम् । तत्त्वतस्तु निमित्तनैमित्तिकभावोऽपि नास्तीत्याह- **नामरूपबीजभूतादिति** । नामरूपबीजभूतमव्याकृतं मायातत्त्वं तदेव निमित्तं भावोत्पत्तौ न ब्रह्म निमित्तमिति द्योतयितुं ब्रह्मणः परात्परत्वमाह- **अव्याकृताख्यादिति** । अव्याकृतं अव्यक्तं मायातत्त्वं स्वविकारापेक्षया परम् उत्कृष्टम् । यतः कार्यापेक्षया कारणं परमुत्कृष्टमिति सर्वसंमतम् । अव्यक्तात्पुरुषस्य परत्वं काठके ' महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥' **आकाशस्येवेति** । व्यापकमित्यर्थः । सर्वमूर्तिवर्जितं-सर्वाकारवर्जितम् । **नेतिनेतीति** । ' स एष आदेशो नेति नेतीत्यस्थूलमनणु ' इत्यादिश्रुत्या सर्वविशेषणरहितं ब्रह्म नतु तत्र निमित्तनैमित्तिकभाव इत्यर्थः । विवक्षन्-वक्तुमिच्छन् । पुरिशयः-देहस्थः । पुर् शब्देन देहोऽभिधीयते । **सबाह्याभ्यन्तर इति** । देहापेक्षया यद्बाह्यमान्तरं च प्रसिद्धं तेन सह तत्तादात्म्येन तदधिष्ठानतया वा वर्तत इति सबाह्याभ्यन्तरः । अत एव सर्वात्मत्वात्तद्व्यतिरिक्तनिमित्ताभावादज इत्यर्थः । **स्वतोऽन्यस्येति** । स्वस्मादात्मनो भिन्नं जन्म

यथा नभःसुषिरभेदानां घटादिः। सर्वभावविकाराणां जनिमूलत्वात्तत्प्रतिषेधेन सर्वे प्रतिषिद्धा भवन्ति। सबाह्याभ्यन्तरो ह्यजोऽतोऽजरोऽमृतोऽक्षरो ध्रुवोऽभय इत्यर्थः। यद्यपि देहाद्युपाधिभेददृष्टीनामविद्यावशाद्देहभेदेषु सप्राणः समनाः सेन्द्रियः सविषय इव प्रत्यवभासते तलमलादिमदिवाकाशं तथापि तु स्वतः परमार्थस्वरूपदृष्टीनामप्राणोऽविद्यमानः क्रियाशक्तिभेदवांश्चलनात्मको वायुर्यस्मिन्नसावप्राणः। तथामना अनेकज्ञानशक्तिभेदवत्संकल्पाद्यात्मकं मनोऽप्यविद्यमानं यस्मिन्सोऽयममनाः। अप्राणो ह्यमनाश्चेति प्राणादिवायुभेदाः कर्मेन्द्रियाणि तद्विषयाश्च तथाच बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्याः। यथा श्रुत्यन्तरे—ध्यायतीव लेलायतीवेति। यस्माच्चैवं प्रतिषिद्धोपाधिद्वयस्तस्माच्छुभ्रः शुद्धः। अतोऽक्षरान्नामरूपबीजो-

---

कारणमस्य नेत्यर्थः। ब्रह्मणोऽन्वयिदृष्टान्तो न संभवति। अतो व्यतिरेकिदृष्टान्तमाह—**यथा जलबुद्बुदादेरिति**। यथा वायुः जलबुद्बुदाद्भिन्नः जलबुद्बुदं प्रति कारणं तथा स्वतो भिन्नमस्य किमपि कारणं नास्तीत्यर्थः। अनेन जलबुद्बुददृष्टान्तेन ब्रह्मोत्पत्तौ वास्तवं कारणं निषिद्धम्। अधुनौपाधिकमपि तन्नास्तीत्युच्यते। **यथा नभःसुषिरभेदानामिति**। यथोपाधिरूपो घटादिराकाशबिलभेदानां कारणं तथौपाधिकमपि कारणं ब्रह्मणो नास्तीत्यर्थः। **जनिमूलत्वादिति**। जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीति षट् भावविकारा यास्केन निरुक्ते प्रतिपादितास्तेषां सर्वेषामुत्पत्तिः प्रथमो विकारः। अत्र 'अजः' इत्यनेन तस्यैव निषेधे कृते तन्मूलका अन्ये निषिद्धा वेदितव्या इत्यर्थः। ननु जीवब्रह्माभेदे जीवानां प्राणादिमत्त्वाद्ब्रह्मणोऽपि प्राणादिमत्त्वं स्यादित्यत आह—**यद्यपीति**। प्राणादिमत्त्वमविद्यावशात्प्रतीयमानं प्रातिभासिकमेव न वास्तवमित्याह—**प्रत्यवभासत इति**। **तलमलादिमदिति**। आकाशस्थानां मेघानां कृष्णत्वं दृष्ट्वा मूढा आकाशस्य तलं मलिनमिति वदन्ति मोहात्। तद्वदुपाधिभेदग्रहिलाः पुरुषा आत्मानं सप्राणादिकं मन्वते। **परमार्थस्वरूपदृष्टीनामिति**। परमार्थस्वरूपं सत्यस्वरूपं तत्र दृष्टिर्येषाम्। **अनेकज्ञानशक्तिभेदवदिति**। स्मृतिसंशयाद्यनेकज्ञानेषु शक्तिभेदः शक्तिविशेषोऽस्यास्तीत्यनेकज्ञानशक्तिभेदवत्। कर्मेन्द्रियाणि-वाक्पाणिपादपायूपस्थाख्यानि। तद्विषयाः-भाषणग्रहणगमनादयः। **बुद्धिमनसी इति**। एतच्चित्ताहंकारयोरप्युपलक्षणम्। तेन चित्तचतुष्टयं निषिद्धं वेदितव्यम्। बुद्धीन्द्रियाणि—ज्ञानेन्द्रियाणि। तद्विषयाः—दर्शनश्रवणस्पर्शनादयः। **प्रतिषिद्धोपाधिद्वय इति**। प्राणमनोरूपोपाधी प्रतिषिद्धौ यस्य। **नामरूपबीजोपाधिलक्षितस्वरूपादिति**। अक्षरस्य परत्वं बोधयितुमिदम्। नामरूपयोर्बीजं ब्रह्म तदुपाधितया लक्षितं गमितं स्वरूपमस्येति। तस्मादुपाधिरूपात्तद्विशिष्टरूपाच्च परतोऽक्षरात्पर

पाधिलक्षितस्वरूपात्सर्वकार्यकारणबीजत्वेनोपलक्ष्यमाणत्वात्परं तदुपाधिलक्षणमव्याकृताख्यमक्षरं सर्वविकारेभ्यस्तस्मात्परतोऽक्षरात्परो निरुपाधिकः पुरुष इत्यर्थः । यस्मिंस्तदाकाशाख्यमक्षरं सव्यवहारविषयमोतं प्रोतं च । कथं पुनरप्राणादिमत्त्वं तस्येत्युच्यते । यदि हि प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनात्मना सन्ति तदा पुरुषस्य प्राणादिना विद्यमानेन प्राणादिमत्त्वं भवेन्न तु ते प्राणादयः प्रागुत्पत्तेः सन्ति । अतोऽप्राणादिमान्परः पुरुषः । यथा, अनुत्पन्ने पुत्रेऽपुत्रो देवदत्तः ॥ २ ॥

कथं ते न सन्ति प्राणादय इत्युच्यते ।

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥**

यस्मादेतस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षिताज्जायत उत्पद्यतेऽ-

---

इति संबन्धः । **सर्वकार्यकारणबीजत्वेनेति** । सर्वाणि कार्याणि घटादीनि कारणानि मृत्तिकादीनि तेषामपि बीजत्वं मूलकारणत्वं तदुपलक्षितत्वात् । **परमिति** । तत्कारणत्वेन गम्यमानत्वान्मायातत्त्वं परम् । अव्याकृताख्यं—मायातत्त्वाख्यम् । **अक्षरमिति** । स्वरूपोच्छेदाभावादित्यर्थः । तदुक्तं भगवद्गीतायाम्—क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ इति । **सव्यवहारविषयमिति** । व्यवहारविषया देहप्राणादयस्तैः सहितम् । **ओतं प्रोतमिति** । वस्त्रं तन्तुष्विवेत्यर्थः । **उच्यत इति** । अस्य प्रश्नस्योत्तरं दीयत इत्यर्थः । **पुरुष इवेति** । यथा पुरुषः स्वरूपेणास्ति तथा प्राणादयो यदि स्वोत्पत्तेः प्राक् स्वरूपेण स्युस्तर्हि प्राणादिमत्त्वं भवेदित्यर्थः । अप्राणो ह्यमना इत्यत्र नञा बोधितो योऽभावः स प्रागभावः । न ध्वंसः । **यथा, अनुत्पन्ने पुत्र इति** । पुत्रोत्पत्तेः प्राक् अपुत्रो देवदत्त इति या प्रथा सा पुत्रप्रागभावं बोधयति पुत्रे जाते विनष्टे च अपुत्रो देवदत्त इति या प्रथा सा पुत्रध्वंसं बोधयति । अप्राणो ह्यमना इत्यत्र प्राणमनसां पुरुषेऽनुत्पत्तिरेवेति प्रागभावो ज्ञेयः । उत्पत्तिध्वंसौ त्वत्र न संभवतः प्रातिभासिकत्वात्तेषाम् ॥ २ ॥

यस्य शुद्धस्य निरुपाधिकस्य निर्विकल्पस्य ब्रह्मणो ज्ञानेन जीवानां कैवल्यं भवति तदेव निर्विकल्पकं निरुपाधिकं ब्रह्म मायाप्रतिबिम्बितरूपेण कारणं भवतीत्याह—**यस्मादेतस्मादेवेति** । नामरूपबीजं माया तद्रूपोपाधिलक्षितादित्यर्थः । प्राणोत्पत्तेरूर्ध्वं ब्रह्मणः सप्राणत्वं स्यादिति शंकां निराकर्तुमाह—**अविद्याविषय इति** । अविद्याविषयत्वं च-अनृतात्मकत्वात् । अनृतात्मकत्वे छान्दोग्यश्रुतिं प्रमाणयति—**वाचारम्भणमिति** । श्रुत्यर्थः-वाचारम्भणं वागालम्बनमित्येतत् । कोऽसौ विकारो नामधेयं नामैव नामधेयं स्वार्थे धेय-

विषयो विकारभूतो नामधेयोऽनृतात्मकः प्राणः "वाचारम्भणं विकारो नामधेयम्"(छां.६।१।४) अनृतम् इति(छां ६।१६।१)श्रुत्यन्तरात्। न हि तेनाविद्याविषयेणानृतेन प्राणेन सप्राणत्वं परस्य स्यादपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण सपुत्रत्वम्। एवं मनः सर्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते। तस्मात्सिद्धमस्य निरुपचरितमप्राणादिमत्त्वमित्यर्थः। यथा च प्रागुत्पत्तेः परमार्थतोऽसन्तस्तथा प्रलीनाश्चेति द्रष्टव्याः। यथा करणानि मनश्चेन्द्रियाणि च तथा शरीरविषयकारणानि भूतानि खमाकाशं वायुर्बाह्य आवहादिभेदः। ज्योतिरग्निः। आप उदकम्। पृथिवी धरित्री विश्वस्य सर्वस्य धारिणी। एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्वपूर्वगुणसहितान्येतस्मादेव जायन्ते ॥ ३ ॥

प्रत्ययः। वागालम्बनमात्रं नामैव केवलं न विकारो नाम वस्त्वस्ति। परमार्थतो मृत्तिकेत्येव। मृत्तिकैव तु सत्यं वस्त्वस्ति। **स्वप्नदृष्टेनेवेति**। यथा कश्चित्स्वप्ने पुत्रं दृष्ट्वा ततः प्रबोध आत्मानं सपुत्रं मनुते तद्वत्। एतस्माज्जायते प्राण इत्यस्मिन्मन्त्रे या प्राणादीनामुत्पत्तिस्तत्र न क्रमः। किन्तु लयानुसारमुत्पत्तेः क्रमो विपरिवर्त्यः। पाठक्रमादार्थक्रमो बलीयानिति न्यायात्। तथाच भूतोत्पत्त्यनन्तरं प्राणोत्पत्तिरभ्युपगन्तव्या। 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति भूतेषु लयश्रवणात्। **विषया इति**। चक्षुरादीन्द्रियाणां विषया रूपरसादयः। **निरुपचरितमिति**। उपचारो लक्षणा तद्रहितं वस्तुभूतमित्यर्थः। **आवहादिभेद इति**। आवहप्रवहादयो वायोः सप्त भेदा इत्यर्थः। आवहः प्रवहश्चैव विवहश्च समीरणः। परावहः संवहश्च उद्वहश्च महाबलः। तथा परिवहः श्रीमानिति हरिवंशे २३६ अध्याय उक्तेः। अभिमुखमागच्छन् वायुरावह इत्यभिधीयते तथा पुरतो गच्छन् प्रवह एवमेवार्थोऽन्यत्रोह्यः। भूवायुरावह इह प्रवहस्तदूर्ध्वमिति सिद्धान्तशिरोमण्युक्तेः। **एतानीति**। आकाशं शब्दगुणेनैकेन विशिष्टम्। वायुः स्वीयस्पर्शगुणेनाकाशगतशब्दगुणेन च विशिष्टो द्विगुणः। तेजः स्वीयेन रूपगुणेन, आकाशवाय्वोः शब्दस्पर्शगुणाभ्यां च विशिष्टं त्रिगुणम्। एवमापश्चतुर्गुणविशिष्टाः। पृथिवी च पञ्चगुणविशिष्टा। अपां विशेषगुणो रसः। पृथिव्याश्च विशेषगुणो गन्धः। नन्विदं भूतगुणवर्णनं ग्रन्थान्तरैर्विरुध्यते। यतस्तत्र पञ्चीकृतानि सर्वभूतानि गृहीतानि तेन पञ्चानामपि भूतानां पञ्च गुणा नत्वेकद्विन्यादिगुणत्वं तथा चात्र ग्रन्थविरोध इति चेन्न। भूतसर्गे तात्पर्यं नास्तीति द्योतयितुं पृथक्या प्रक्रियाप्रतिपादनात्। यतोऽत्र भूतोत्पत्तिज्ञाने स्वर्गमोक्षादिरूपं फलं नास्ति तेन न विरोधः। पञ्चीकरणप्रकारश्च। आकाशादिषु पञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु भागेषु मध्ये प्राथमिकान्पञ्च भागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्धभागं परित्यज्य भागान्तरेषु संयोजनम्। 'तदुक्तं–द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते' ॥ ३ ॥

संक्षेपतः परविद्याविषयमक्षरं निर्विशेषं पुरुषं सत्यं "दिव्यो ह्यमूर्तः" (मु.२।१।२) इत्यादिना मन्त्रेणोक्त्वा पुनस्तदेव सविशेषं विस्तरेण वक्तव्यमिति प्रववृते। संक्षेपविस्तरोक्तो हि पदार्थः सुखाधिगम्यो भवति सूत्रभाष्योक्तिवदिति। यो हि प्रथमजात्प्राणाद्धिरण्यगर्भाज्जायतेऽण्डस्यान्तर्विराट् स तत्त्वान्तरितत्वेन लक्ष्यमाणोऽप्येतस्मादेव पुरुषाज्जायत एतन्मयश्चेत्येतदर्थमाह। तं च विशिनष्टि।

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥ ४॥

अग्निर्द्युलोकः "असौ वाव लोको गौतमाग्निः". (छां.५।४।१) इति श्रुतेः। मूर्धा यस्योत्तमाङ्गं शिरः। चक्षुषी चन्द्रश्च सूर्यश्चेति चन्द्रसूर्यौ। यस्येति सर्वत्रानुषङ्गः कर्तव्यः। अस्येत्यस्य पदस्य वक्ष्यमाणस्य यस्येति विपरिणामं कृत्वा दिशः श्रोत्रे यस्य। वाग्विवृता उद्घाटिताः प्रसिद्धा वेदा यस्य। वायुः प्राणो यस्य। हृदयमन्तःकरणं विश्वं समस्तं जगदस्य यस्येत्येतत्। सर्वं ह्यन्तःकरणविकारमेव जगन्मनस्येव सुषुप्ते प्रलयदर्शनात्। जागरितेऽपि तत एवाग्निविस्फुलिङ्गवद्विप्रतिष्ठानात्। यस्य च पद्भ्यां जाता पृथिवी। एष विद्या-

---

पूर्वोत्तरमन्त्रयोः संगतिं दर्शयितुमाह—**संक्षेपत इति**। **प्रववृत इति**। श्रुतिरित्यर्थः। **सुखाधिगम्य इति**। पूर्वं शास्त्रसिद्धान्तः संक्षेपेण बोधनीयस्ततः स एव विस्तरेण बोधनीयस्तथा प्रतिपादिते सुखेन शिष्यबुद्धिगम्यो भवति स इत्यर्थः। **सूत्रभाष्योक्तिवदिति**। सूत्रलक्षणं—स्वल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः। इति। भाष्यलक्षणं च—सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः। इति। एवं च यथा सूत्रे स्वल्पग्रन्थो भाष्ये विस्तरग्रन्थस्तद्वदित्यर्थः। **तत्त्वान्तरितत्वेनेति**। तत्त्वेन हिरण्यगर्भाख्येन अन्तरितत्वेन व्यवहितत्वेन। यद्यपि ब्रह्मणो विराजश्च मध्ये हिरण्यगर्भाख्यं तत्त्वं व्यवधायकं तथापि विराज उत्पत्तिरेतस्मादेव ब्रह्माख्यात्पुरुषाज्जायत इति ज्ञेयमित्यर्थः। एतन्मयः—एतद्रूपः।

**असाविति**। द्युलोक इत्यर्थः। अनुषंगः—संबन्धः। यस्य चक्षुषी चन्द्रसूर्याविति संबन्धः कर्तव्य इत्यर्थः। **विपरिणाममिति**। अस्येत्यस्य स्थाने यस्येति पठनीयं तेन यस्येत्यस्य प्रवाहः सुसंगतो भवतीत्यर्थः। **विप्रतिष्ठानादिति**। उत्थानादित्यर्थः। भूतानां—

देवो विष्णुरनन्तः प्रथमशरीरी त्रैलोक्यदेहोपाधिः सर्वेषां भूतानामन्तरात्मा। स हि सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्वकारणात्मा ॥ ४ ॥

पञ्चाग्निद्वारेण च याः संसरन्ति प्रजास्ता अपि तस्मादेव पुरुषात्प्रजायन्त इत्युच्यते।

**तस्मादग्निः समिधो यस्य सूर्यः**
**सोमात्पर्जन्य ओषधयः पृथिव्याम्।**
**पुमान्रेतः सिञ्चति योषितायां**
**बह्वीः प्रजाः पुरुषात्संप्रसूताः ॥ ५ ॥**

तस्मात्परस्मात्पुरुषात्प्रजावस्थानविशेषरूपोऽग्निः स विशिष्यते। समिधो यस्य सूर्यः समिध इव समिधः। सूर्येण हि द्युलोकः समिध्यते। ततो हि द्युलोकाग्नेर्निष्पन्नात्सोमात्पर्जन्यो द्वितीयोऽग्निः संभवति। तस्माच्च पर्जन्यादोषधयः पृथिव्यां संभवन्ति। ओषधिभ्यः पुरुषाग्नौ हुताभ्य उपादानभूताभ्यः पुमानग्नी रेतः सिञ्चति योषितायां योषिति योषाग्नौ स्त्रियामिति। एवं क्रमेण बह्वीर्बह्व्यः प्रजा ब्राह्मणाद्याः पुरुषात्परस्मात्संप्रसूताः समुत्पन्नाः ॥ ५ ॥

किंच कर्मसाधनानि फलानि च तस्मादेवेत्याह। कथम्—

**तस्मादृचः साम यजूंषि दीक्षा**
**यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।**
**संवत्सरश्च यजमानश्च लोकाः**
**सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥**

---

पञ्चानां महाभूतानाम्। **अन्तरात्मेति**। स्थूलपञ्चभूतशरीरो हि विराडित्यर्थः ॥ ४ ॥

**पञ्चाग्निद्वारेणेति**। असौ वाव लोको गौतमाग्निः—इत्यारभ्य श्रुतौ द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निदृष्टिः कर्तव्या। पञ्चैते द्युलोकादयोऽग्निरूपेणोपास्या इति विहितं तेनैते द्युलोकादयः पञ्चाग्नयः। तद्द्वारा प्रजानां संसरणम्। तथाहि—प्रारब्धानुसारं मनुष्यलोके जायमानो जीवः प्रथमं द्युलोकेऽवतरति ततः पर्जन्यद्वारा स पृथिव्यां बीजरूपेणावतरति ततोऽन्नरूपेण पुरुषशरीरे गच्छति ततो गर्भरूपेण स्त्रिया उदरे स्थितिः। एवं रीत्या संसरन्त्योऽपि प्रजाः परम्परया पुरुषादेव प्रजायन्त इत्युच्यते।

**प्रजावस्थानविशेषरूप इति**। संसरन्तीनां प्रजानां स्थितिर्यत्रैतादृशो द्युलोकाग्निरित्यर्थः ॥ ५ ॥

**कर्मसाधनानीति**। कर्मणां यज्ञादीनां साधनानि वेदाः। फलानि च स्वर्गादीनि।

तस्मात्पुरुषादृचो नियताक्षरपादावसाना गायत्र्यादिच्छन्दोविशिष्टा मन्त्राः। साम पाञ्चभक्तिकं साप्तभक्तिकं च स्तोभादिगीतिविशिष्टम्। यजूंष्यनियताक्षरपादावसानानि वाक्यरूपाणि। एवं त्रिविधा मन्त्राः। दीक्षा मौञ्ज्यादिलक्षणा कर्तृनियमविशेषाः। यज्ञाश्च सर्वेऽग्निहोत्रादयः। क्रतवः सयूपाः। दक्षिणाश्चैकगवाद्या अपरिमितसर्वस्वान्ताः। संवत्सरश्च कालः कर्माङ्गभूतः। यजमानश्च कर्ता। लोकास्तस्य कर्मफलभूताः। ते विशेष्यन्ते सोमो यत्र येषु लोकेषु पवते पुनाति लोकान्यत्र येषु सूर्यस्तपति। ते च दक्षिणायनोत्तरायणमार्गद्वयगम्या विद्वदविद्वत्कर्तृफलभूताः॥ ६॥

---

**नियताक्षरपादावसाना इति**। पञ्च षट् अष्टौ वा अक्षराणि नियतानि येषु एतादृशाः पादा अथवा यतयो विश्रामस्थानानि येषु। यतिरपि नियताक्षरः। **गायत्र्यादीति**। गायत्री, त्रिष्टुप्, जगती, अनुष्टुप्, पंक्तिः, बृहती, ककुबित्यादीनि छन्दांसि पिंगलेन छन्दःशास्त्रे लक्षितानि। तद्विशिष्टास्तच्छन्दोबद्धा मन्त्राः। **सामेति**। गीत्यात्मकं सामेति सामलक्षणम्। सामवेदे गीतिस्वरूपेण प्रायो ऋङ्मन्त्रा एव दृश्यन्ते। **पाञ्चभक्तिकमिति**। भक्तिरवयवः। हिंकारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः पञ्च भक्त्योऽवयवा यस्य। **साप्तभाक्तिकमिति**। हिंकारप्रस्तावाद्युद्गीथप्रतिहारोपद्रवनिधनाख्याः सप्त भक्तयोऽवयवा यस्य तत्। **स्तोभादीति**। हिं हिं हिं हावु हावु इत्याद्यात्मकोऽर्थशून्यो वर्णसमुदायः। **वाक्यरूपाणीति**। गाथारूपाणीत्यर्थः। गद्यरूपाणीति यावत्। **त्रिविधा इति**। ऋग्यजुःसामरूपेण। **मौञ्ज्यादीति**। कटिप्रदेशे मुञ्जतृणानिर्मितरज्जुबन्धनं मौञ्जी। आदिपदेन मृगशृंगेणांगकण्डूयनम्, पयोभक्षणमित्यादयो यजमानस्य नियमा ज्ञेयाः। **अग्निहोत्रादय इति**। प्रत्यहं यदग्निहोत्रहोमात्मकं कर्म तदादि पशुरहिता यज्ञा दर्शपौर्णमासादयः। **सयूपा इति**। यूपः—यज्ञियपशुबन्धनार्थं काष्ठं तत् यज्ञमण्डपे खन्यते। एवं यूपसहिता यज्ञाः क्रतव इत्यभिधीयन्ते। पशुहिंसा शास्त्रविहिता तादृशा यज्ञा इत्यर्थः। विश्वजित्सर्वमेधयोः सर्वस्वदक्षिणा तदाह—**अपरिमितसर्वस्वान्ता इति**। **दक्षिणायनोत्तरायणमार्गद्वयगम्या इति**। इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति॥ मुं. १।२।१०॥ इत्युक्तो दक्षिणमार्गस्तत्फलं च। तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः। सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा॥ मुं. १।२।११॥ इत्युक्त उत्तरमार्गस्तत्फलं चेति। **विद्वदविद्वत्कर्तृफलभूता इति**। विद्वान्-उपासकः। अविद्वान्—कर्मठः। उपासकेन कर्त्रोत्तरायणमार्गद्वारा हिरण्यगर्भलोको लभ्यते। अविदुषा कर्मठेन स्वर्गादयो लोका लभ्यन्त इत्यर्थः॥ ६॥

**तस्माच्च देवा बहुधा संप्रसूताः**
**साध्या मनुष्याः पशवो वयांसि ।**
**प्राणापानौ व्रीहियवौ तपश्च**
**श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥**

तस्माच्च पुरुषात्कर्माङ्गभूता देवा बहुधा वस्वादिगणभेदेन संप्रसूताः सम्यक्प्रसूताः । साध्या देवविशेषाः । मनुष्याः कर्माधिकृताः । पशवो ग्राम्यारण्याः । वयांसि पक्षिणः । जीवनं च मनुष्यादीनां प्राणापानौ । व्रीहि-यवौ हविरर्थौ । तपश्च कर्माङ्गं पुरुषसंस्कारलक्षणं स्वतन्त्रं च फलसाधनम् । श्रद्धा यत्पूर्वकः सर्वपुरुषार्थसाधनप्रयोगश्चित्तप्रसाद आस्तिक्यबुद्धिः तथा सत्यमनृतवर्जनं यथाभूतार्थवचनं चापीडाकरम् । ब्रह्मचर्यं मैथुनासमाचारः । विधिश्चेतिकर्तव्यता ॥ ७ ॥

किंच—

**सप्त प्राणाः प्रभवन्ति तस्मा-**
**त्सप्तार्चिषः समिधः सप्त होमाः ।**
**सप्त इमे लोका येषु चरन्ति प्राणा**
**गुहाशया निहिताः सप्त सप्त ॥ ८ ॥**

सप्त शीर्षण्याः प्राणास्तस्मादेव पुरुषात्प्रभवन्ति ।तेषां सप्तार्चिषो दीप्तयः स्व-विषयावद्योतनानि । तथा सप्त समिधः सप्त विषयाः । विषयैर्हि समिध्यन्ते प्राणाः । सप्त होमास्तद्विषयविज्ञानानि "यदस्य विज्ञानं तज्जुहोति"(म.ना. २५।१)इति

**कर्मांगभूता इति** । यज्ञकर्मसु येभ्य आहुतयो दीयन्ते तेन ते वस्वादयो देवाः संप्रदानभूतत्वादंगभूताः कर्मणीत्यर्थः । **तपश्चेति** । तपो द्विविधम् । पुरुषसंस्कारकमेकम् । स्वतन्त्रं फलसाधकं चैकम् । तत्र प्रथमं पुरुषसंस्कारकं 'पयोव्रतो ब्राह्मणः, यवागूव्रतो राजन्यः, आमिक्षाव्रतो वैश्य इत्यादिना विहितं ब्राह्मणादेः पयोभक्षणादिकं कृच्छ्रचान्द्रायणा-दिकं च ज्ञेयम् । **आस्तिक्यबुद्धिरिति** । अस्ति दिष्टं परलोक इति मतिर्यस्य स आस्तिकस्तस्य भाव आस्तिक्यम् । **अपीडाकरमिति** । सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्स-त्यमप्रियम् । प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ इति मनुस्मृतेः । असमाचारः—वर्ज-नम् । दर्शनस्पर्शनाद्यष्टविधमैथुनाभाव इत्यर्थः ॥ ७ ॥

**शीर्षण्या इति** । मुखनासिकाक्षश्रोत्रगतानि सप्त बिलानीत्यर्थः । **स्वविषया-वद्योतनानीति** । चक्षुरादीन्द्रियाणां दर्शनादीनि विषयास्तत्तदुपलब्धिरित्यर्थः । **निवृत्त्य-**

श्रुत्यन्तरात् । किंच सप्तेमे लोका इन्द्रियस्थानानि येषु चरन्ति संचरन्ति प्राणा इति विशेषणात् । प्राणा येषु चरन्तीति प्राणानां विशेषणमिदं प्राणापानादिनिवृत्त्यर्थम् । गुहायां शरीरे हृदये वा स्वापकाले शेरत इति गुहाशयाः । निहिताः स्थापिता धात्रा सप्त सप्त प्रतिप्राणिभेदम् । यानि चात्मयाजिनां विदुषां कर्माणि कर्मफलानि चाविदुषां च कर्माणि तत्साधनानि कर्मफलानि च सर्वं चैतत्परस्मादेव पुरुषात्सर्वज्ञात्प्रसूतमिति प्रकरणार्थः ॥ ८ ॥

अतः समुद्रा गिरयश्च सर्वेऽ-
स्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।
अतश्च सर्वा ओषधयो रसश्च
येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥

अतः पुरुषात्समुद्राः सर्वे क्षाराद्याः । गिरयश्च हिमवदादयोऽस्मादेव पुरुषात्सर्वे । स्यन्दन्ते स्रवन्ति गङ्गाद्याः सिन्धवो नद्यः सर्वरूपा बहुरूपाः । अस्मादेव पुरुषात्सर्वा ओषधयो व्रीहियवाद्याः । रसश्च मधुरादिः षड्विधो येन रसेन भूतैः पञ्चभिः स्थूलैः परिवेष्टितस्तिष्ठते तिष्ठति ह्यन्तरात्मा लिङ्गं सूक्ष्मं शरीरम् । तद्ध्यन्तराले शरीरस्यात्मनश्चात्मवद्वर्तत इत्यन्तरात्मा ॥९॥

पुरुष एवेदं विश्वं कर्म
तपो ब्रह्म परामृतम् ।
एतद्यो वेद निहितं गुहायां
सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषदि द्वितीयमुण्डके प्रथमः खण्डः ॥ १ ॥

एवं पुरुषात्सर्वमिदं संप्रसूतम् । अतो वाचारम्भणं विकारो नामधेयमनृतं पुरुष इत्येव सत्यम् । अतः पुरुष एवेदं विश्वं सर्वम् । न विश्वं नाम पुरुषादन्यत्किंचिदस्ति । अतो यदुक्तं तदेवेदमभिहितं " कस्मिन्नु

---

र्थमिति । तेन प्राणपदेन प्राणापानादिवृत्तीनां ग्रहणं न कर्तव्यम् । **आत्मयाजिनामिति** । सकलमिदमहं च परमात्मैवेति भावनापूर्वकं परमेश्वरबुद्ध्या यजनमेव येषां स्वभाव इत्यर्थः ॥ ८ ॥

अन्तराले—मध्ये ॥ ९ ॥

**किंचिदस्तीति** । परमेश्वर एव सर्वं नान्यत्किंचित्तेन द्वैतस्यासंभवः । **जीवन्नेवेति** । जीवन्मुक्तिबोधकमिहेति पदमस्मिन्मन्त्रे । तेन ये जीवन्मुक्तिं नांगीकुर्वन्ति बौधा-

भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" (मु. १।१।३) इति। एतस्मिन्हि परस्मिन्नात्मनि सर्वकारणे पुरुषे विज्ञाते, पुरुष एवेदं विश्वं नान्यदस्तीति विज्ञातं भवतीति। किं पुनरिदं विश्वमित्युच्यते। कर्माग्निहोत्रादिलक्षणम्। तपो ज्ञानं तत्कृतं फलमन्यदेव। तावद्धीदं सर्वम्। तच्चैतद्ब्रह्मणः कार्यं तस्मात्सर्वं ब्रह्म परामृतं परममृतमहमेवेति यो वेद निहितं स्थितं गुहायां हृदि सर्वप्राणिनां स एवं विज्ञानादविद्याग्रन्थिं ग्रन्थिमिव दृढीभूतामविद्यावासनां विकिरति विक्षिपति विनाशयतीह जीवन्नेव न मृतः सन् हे सोम्य प्रियदर्शन ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये द्वितीयमुण्डके प्रथमः खण्डः ॥१॥

अरूपं सदक्षरं केन प्रकारेण विज्ञेयमित्युच्यते।

**आविः संनिहितं गुहाचरं नाम महत्पदमत्रैतत्समर्पितम्।**
**एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥**

आविः प्रकाशं संनिहितं, वागाद्युपाधिभिः "ज्वलति भ्राजति" इति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते। दर्शनश्रवणमननविज्ञानाद्युपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्वप्राणिनाम्। यदेतदाविर्भूतं ब्रह्म संनिहितं सम्यक्स्थितं हृदि, तद्गुहाचरं नाम गुहायां चरतीति दर्शनश्रवणादि-

यनादयस्तन्निरासः। यत्पृष्टं कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति तन्निरूपितम्। सर्वमिदं परमात्मनो जायते। अतः परमात्ममात्रमिदं सर्वम्। तस्मिन्विज्ञाते विज्ञातं भवतीत्युपसंहृतम्। परमात्मनोऽतिरिक्तं भासमानमविद्यामयं ततः क्षयिफलकमिति तेन सर्वदा स्थित्यभावात् न द्वैतसंभवः ॥ १० ॥

इति श्रीमुण्डकोपनिषद्भाष्ये बालबोधिन्यां द्वितीयमुण्डके प्रथमः खण्डः ॥२।१॥

ब्रह्मणो दुर्विज्ञेयत्वाद्यस्य सकृदुपदेशमात्रेण ज्ञानं न भवति तस्य तत्प्राप्त्युपायं दर्शयितुमाह—**अरूपमित्यादि**। अक्षरब्रह्मप्राप्तावुपायो वाक्यार्थस्यैव पुनः पुनर्भावनं युक्त्यनुसंधानं चेत्याह—**उच्यत इति**। प्रकाशवाचकमव्ययम् आविरिति। ब्रह्म विश्वोपलब्ध्यात्मना सदा प्रकाशमानमेवेति भावयेदित्यर्थः। तथा चोक्तम्—यदस्ति यद्भाति तदात्मरूपं नान्यत्ततो भाति न चान्यदस्ति। स्वभावसंवित्प्रतिभाति केवलं ग्राह्यं ग्रहीतेति मृषैव कल्पना ॥ इति। **संनिहितमिति**। सर्वप्राणिनां हृदये स्थितं वागाद्युपाधिभिः शब्दादीन्युपलभमानवद्ब्रह्मैव जीवभावमापन्नमवभासते। तेन निरुपाधिकतया प्रत्यक्षमिति सर्वदा स्मरेदित्यर्थः। **गुहाचरमिति**। बुद्धिस्थमित्यर्थः। **पद्यत इति**। पद्यते प्राप्यत इत्यर्थः।

प्रकारैर्गुहाचरमिति प्रख्यातम् । महत्सर्वमहत्त्वात्पदं पद्यते सर्वेणेति, सर्वपदार्थास्पदत्वात् । कथं तन्महत्पदमित्युच्यते । यतोऽत्रास्मिन्ब्रह्मण्येतत्सर्वं समर्पितं प्रवेशितं रथनाभाविवाराः । एजच्चलत्पक्ष्यादि । प्राणत्प्राणितीति प्राणापानादिमन्मनुष्यपश्वादि । निमिषच्च यन्निमेषादिक्रियावद्यच्चानिमिषत् । चशब्दात्समस्तमेतदत्रैव ब्रह्मणि समर्पितम् । एतद्यदास्पदं सर्वं जानथ हे शिष्या अवगच्छत तदात्मभूतं भवताम् । सदसत्स्वरूपं सदसतोर्मूर्तामूर्तयोः स्थूलसूक्ष्मयोस्तद्व्यतिरेकेणाभावात् । वरेण्यं वरणीयं तदेव हि सर्वस्य नित्यत्वात्प्रार्थनीयम् । परं व्यतिरिक्तं विज्ञानात्प्रजानामिति व्यवहितेन संबन्धो यल्लौकिकविज्ञानागोचरमित्यर्थः । यद्वरिष्ठं वरतमं सर्वपदार्थेषु वरेषु तद्ध्येकं ब्रह्मातिशयेन वरं सर्वदोषरहितत्वात् ॥ १ ॥

---

यत्सर्वास्पदं सर्वाधिकरणत्वात्सर्वस्थानं तदेव सर्वैः प्राप्यत इत्याह—**सर्वपदार्थास्पदत्वादिति** । यद्यत् कार्यं तत्तत्सास्पदं यथा घटः । इदं सर्वं मायादिकं कार्यम् । अतः सास्पदम् । यथा घटस्यास्पदमधिकरणं भूमिस्तथा मायादिकस्य सर्वस्य कार्यजातस्यास्पदं किंचिदपेक्ष्यते तद्ब्रह्मणोऽतिरिक्तं न भवत्यतस्तद्ब्रह्म महत्पदम् । द्वितीयमप्यनुमानमस्यार्थस्य प्रतिपादकम् । तथाहि यद्यत् परिच्छिन्नं तत्तत्सास्पदं यथा घटः । इदं सर्वं मायादिकं परिच्छिन्नमव्यापकम् । अतः सास्पदम् । यथा परिच्छिन्नस्याव्यापकस्य घटस्यास्पदं घटापेक्षया व्यापकं भूम्यादिकं तथा मायादिकार्यस्याव्यापकस्यास्पदं तदपेक्षया व्यापकं ब्रह्मैव संभवति सर्वव्यापकत्वादतो ब्रह्मैव सर्वपदार्थास्पदं तत्प्रतिपादयति—**कथमित्यादिना** । **रथनाभाविति** । रथचक्रस्य मध्यभागो नाभिरित्यभिधीयते तत्र रथगतानां तिर्यक्काष्ठानामराणां यथा प्रवेशस्तद्वदित्यर्थः । **एजदिति** । 'एजृ कम्पने' इति धातो रूपम् । **मनुष्यपश्वादीति** । यद्यपि कम्पनप्राणापानादिमत्त्वनिमेषणादिकं मनुष्यपक्षिपश्वादिषु सर्वप्राणिषु समानं तथापि कम्पनादिवैशिष्ट्यात्पार्थक्येनोक्तिः । विशेषतः कम्पनं पक्ष्यादिषु संभवति न मनुष्येषु । विशेषतः प्राणापानादिव्यवहारा मनुष्यपश्वादिषु संभवन्ति न पक्ष्यादिष्वित्यर्थः । अनिमिषत्—जडं स्थावरादिकम् । **भवतामिति** । भवतां स्वरूपभूतमेव तत् । तद्व्यतिरेकेण—तद्विना । **व्यवहितेनेति** । विज्ञानाद्यद्वरिष्ठं प्रजानामिति मूले मध्यस्थं यद्वरिष्ठमिति पदद्वयं परित्यज्य विज्ञानादित्यस्य प्रजानामित्यनेन संबन्धः । ततश्च प्रजानां विज्ञानात्परं व्यतिरिक्तमित्यर्थः । **लौकिकविज्ञानागोचरमिति** । लौकिकं यद्दर्शनश्रवणादिविज्ञानं तस्यागोचरं तेनागम्यं 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । वरेषु—श्रेष्ठेषु ॥ १ ॥

किंच—

यदर्चिमद्यदणुभ्योऽणु च
यस्मिँल्लोका निहिता लोकिनश्च ।
तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः
तदेतत्सत्यं तदमृतं
तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

यदर्चिमद्दीप्तिमत् । तद्दीप्त्या ह्यादित्यादि दीप्यत इति दीप्तिमद्ब्रह्म । किंच यदणुभ्यः श्यामाकादिभ्योऽप्यणु च सूक्ष्मम् । चशब्दात्स्थूलेभ्योऽप्यतिशयेन स्थूलं पृथिव्यादिभ्यः । यस्मिँल्लोका भूरादयो निहिताः स्थिताः। ये च लोकिनो लोकनिवासिनो मनुष्यादयश्चैतन्याश्रया हि सर्वे प्रसिद्धाः । तदेतत्सर्वाश्रयमक्षरं ब्रह्म स प्राणस्तदु वाङ्मनो वाक्च मनश्च सर्वाणि च करणानि तदन्तश्चैतन्यं चैतन्याश्रयो हि प्राणेन्द्रियादिसर्वसंघातः "प्राणस्य प्राणम्" (बृ.४।४।१८) इति श्रुत्यन्तरात् । यत्प्राणादीनामन्तश्चैतन्यमक्षरं तदेतत्सत्यमवितथमतोऽमृतमविनाशि तद्वेद्धव्यं मनसा ताडयितव्यम् । तस्मिन्मनसः समाधानं कर्तव्यमित्यर्थः । यस्मादेवं हे सोम्य विद्धयक्षरे चेतः समाधत्स्व॥२॥

---

**अर्चिमदिति** । अर्चिःशब्दस्येकारान्तत्वमार्षम् । **तद्दीप्त्येति** । ब्रह्मदीप्त्या आदित्यादयः प्रकाशन्ते । 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः । दीप्तिमतः सूर्यादेरिन्द्रियग्राह्यत्वं लोके दृष्टं ब्रह्मापि दीप्तिमत्ततस्तदिन्द्रियग्राह्यं स्यादित्यत आह–**यदणुभ्य इति** । स्थूलबुद्धिभिरगम्यमित्यर्थः । **श्यामकादिभ्य इति** । श्यामाकसंज्ञकं लघुबीजं धान्यं 'सावे' इति महाराष्ट्रभाषाप्रसिद्धम् । **स्थूलेभ्य इति** । 'अणोरणीयान् महतो महीयान्' इति श्रुतेः । यतः पृथिव्यादिभ्यो महदतस्तत्र भूरादयो लोका निहितास्तदाह–**यस्मिन्निति** । प्राणादिवृत्तयः, चेतनाधिष्ठानमवलम्ब्य प्रवर्तमानाः, जडवृत्तित्वाद्रथप्रवृत्तिवत् । यथा रथप्रवृत्तिश्चेतनहयानवलम्ब्य तदधिष्ठानतया जायते तद्वत् प्राणादिप्रवृत्तिश्चेतनं ब्रह्म, अधिष्ठानत्वेनाश्रित्य जायते तदतिरिक्तं प्राणादि प्रवृत्त्याधिष्ठानं तु न संभवत्यतः एकचैतन्यमात्मस्मीति विचारयेदित्याह–**तदेतत्सर्वाश्रयमिति** । **तदन्तश्चैतन्यमिति** । तत् उ अन्तश्चैतन्यमिति पदच्छेदः । तत्प्राणादिकं सर्वमन्तश्चैतन्यं, अन्तर्गतं चैतन्यं यस्य तदेवं भूतं ज्ञेयमित्यर्थस्तदाह–**चैतन्याश्रय इति** । संघातः–समुदायः । **ताडयितव्यमिति** । भावयितव्यमित्यर्थः । **समाधत्स्वेति** । प्राणाद्यधिष्ठानत्वात्प्राणादिलक्ष्य आत्मा द्रष्टव्य इत्यर्थः ॥ २ ॥

कथं वेद्धव्यमित्युच्यते ।

धनुर्गृहीत्वौपनिषदं महास्त्रं
शरं ह्युपासानिशितं संदधीत ।
आयम्य तद्भावगतेन चेतसा
लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥

धनुरिष्वासनं गृहीत्वादायौपनिषदमुपनिषत्सु भवं प्रसिद्धं महास्त्रं महच्च तदस्त्रं च महास्त्रं धनुस्तस्मिञ्शरम् । किंविशिष्टमित्याह । उपासानिशितं संतताभिध्यानेन तनूकृतं संस्कृतमित्येतत् । संदधीत संधानं कुर्यात् । संधाय चायम्याकृष्य सेन्द्रियमन्तःकरणं स्वविषयाद्विनिवर्त्य लक्ष्य एवावर्जितं कृत्वेत्यर्थः । न हि हस्तेनेव धनुष आयमनमिह संभवति । तद्भावगतेन तस्मिन्ब्रह्मण्यक्षरे लक्ष्ये भावना भावस्तद्गतेन चेतसा, लक्ष्यं तदेव यथोक्तलक्षणमक्षरं सोम्य विद्धि ॥ ३ ॥

प्रणवो धनुः शरो ह्यात्मा
ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं
शरवत्तन्मयो भवेत् ॥ ४ ॥

यदुक्तं धनुरादि तदुच्यते । प्रणव ओंकारो धनुः । यथेष्वासनं लक्ष्ये शरस्य प्रवेशकारणं तथात्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमोंकारः । प्रणवेन ह्यभ्यस्यमानेन संस्क्रियमाणस्तदालम्बनोऽप्रतिबन्धेनाक्षरेऽवतिष्ठते यथा

---

यश्च मुमुक्षुर्विचारेऽसमर्थस्तेन प्रणवाभ्यासः कार्यस्ततस्तस्य ब्रह्मात्मैकत्वे चित्तसमाधानं स्यात्तत्फलं च क्रममुक्तिरिति दर्शयितुमुपक्रमते–**कथं वेद्धव्यमिति** । **संस्कृतमिति** । शरस्य शाणोपरि घर्षणेन यथा संस्कारस्तथोपासनारूपशाणस्योपरि आत्मशरस्य तनूकरणरूपः संस्कारः कर्तव्य इत्यर्थः । **स्वविषयादिति** । चक्षुरादीनीन्द्रियाणि रूपरसादिभ्यो विनिवर्त्य ब्रह्मलक्ष्य एव संस्थापनीयानि । आवर्जनं–संपादनम् । आयमनं–आकर्षणम् । इह–ब्रह्मवस्तुनि दार्ष्टान्तिके । **यथोक्तलक्षणमिति** । आविः संनिहितं गुहाचरमित्यादिना मन्त्रद्वयेनोक्तम् । **अक्षरमिति** । न क्षीयते न क्षरतीति वा अक्षरं ब्रह्मेत्यर्थः ॥ ३ ॥

**इष्वासनमिति** । इषवो बाणा आस्यन्ते स्थाप्यन्ते लक्ष्येऽनेनेति इष्वासनं धनुरित्यर्थः । **तदालम्बन इति** । स प्रणव आलम्बनम् आश्रयभूतो यस्य । अप्रतिबन्धेन–

धनुषास्त इषुर्लक्ष्ये । अतः प्रणवो धनुरिव धनुः । शरो ह्यात्मोपाधिलक्षणः पर एव जले सूर्यादिवदिह प्रविष्टो देहे सर्वबौद्धप्रत्ययसाक्षितया । स शर इव स्वात्मन्येवार्पितोऽक्षरे ब्रह्मणि । अतो ब्रह्म तल्लक्ष्यमुच्यते लक्ष्य इव मनः-समाधित्सुभिरात्मभावेन लक्ष्यमाणत्वात् । तत्रैवं सत्यप्रमत्तेन बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेणैकाग्रचित्तेन वेद्धव्यं ब्रह्म लक्ष्यम् । ततस्तद्वेधनादूर्ध्वं शरवत्तन्मयो भवेत् । यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति । तथा देहाद्यात्मताप्रत्ययतिरस्करणेनाक्षरैकात्मत्वं फलमापादये-दित्यर्थः ॥ ४ ॥

---

निर्विघ्नतया । आस्तः-स्थापितः । यथा धनुः शरस्य लक्ष्ये प्रवेशकारणं तथात्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमभ्यस्यमान ॐकारः । **आत्मोपाधिलक्षण इति ।** बुद्धौ प्रतिबिम्बितं चैतन्यं जीवसंज्ञकम् । बिम्बरूपं चैतन्यं परमात्मसंज्ञकम् । जीवात्मा शरस्थानीयः । परमात्मा लक्ष्यस्थानीयः । आकाशस्थस्य सूर्यस्य जले प्रतिबिम्बं दृश्यते तस्य जलप्रतिबिम्बितसूर्यस्य आकाशस्थसूर्यस्य च यथा भेद उपाधिद्वारा वस्तुत्वेन चाभेदः । तथा बुद्धिप्रतिबिम्बित-चैतन्यात्मकस्य जीवस्य निरुपाधिकचैतन्यात्मकस्य ब्रह्मणश्च भेद उपाधिद्वारा वस्तुत्वेन चाभेदः । एवंच वास्तवरूपेण जीवो ब्रह्मैव । तदाह-**पर एवेति** । तदुक्तमभियुक्तैः । श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः । ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ॥१॥

**सर्वबौद्धप्रत्ययसाक्षितयेति** । सर्वे बौद्धा बुद्धिसंबन्धिनः प्रत्ययाः श्रवणदर्शनसुख-दुःखादिज्ञानानि तेषां साक्षी जीवस्तत्तया तत्स्वरूपेण । अयं भावः । चैतन्यं बुद्धौ प्रति-बिम्बितं सत् तस्या दर्शनादिवृत्तीः प्रकाशयति तत्प्रकाशानुभवस्य गृहीता जीवः सोऽपि चैतन्यस्वरूप एव न ततोऽतिरिक्तः । प्रणवो ब्रह्मेत्यभिध्यायत उपसंहृतकरणग्रामस्य प्रणवो-परक्तं यच्चैतन्यप्रतिबिम्बं स्फुरति स आत्मेत्यनुसंधानं प्रणवे शरसंधानम् । तस्य चित्प्रति-बिम्बस्य बिम्बैक्यानुसंधानं लक्ष्यवेधः । **स्वात्मनीति** । स्वस्य जीवस्य आत्मनि स्वरूप-भूते ब्रह्मणीत्यर्थः । अप्रमत्तत्वं वर्णयति-**बाह्यविषयेत्यादि** । बाह्यानां घटपटादिविषयाणां, उपलब्धिः प्राप्तिः, तथा तद्विषयिणी तृष्णात्यन्तमिच्छा तथा तद्विषयकः प्रमादश्च तद्वर्जितेन तद्रहितेन घटपटादिबाह्यविषयप्राप्तिं तदिच्छां तद्विषयकप्रमादं च वर्जयित्वेत्यर्थः । **शरव-दिति** । यथा शरः स्वरूपावशेषेण लक्ष्यमग्नो भवति तद्वज्जीवो न स्वरूपावशेषेण ब्रह्ममग्नः किन्तु तद्रूपो भवेदिति दृष्टान्तापेक्षयापि दार्ष्टान्त आधिक्यम् । तन्मयः-तद्रूपः । **देहाद्या-त्मतेति** । देह एवात्मेति प्रत्ययो ज्ञानं तत्तिरस्कारद्वारा । देहात्मबुद्धिं तिरस्कृत्य जीव-परमात्मैक्यबुद्धिं संपादयेत् ॥ ४ ॥

**यस्मिन्द्यौः पृथिवी चान्तरिक्ष-**
**मोतं मनः सह प्राणैश्च सर्वैः ।**
**तमेवैकं जानथ आत्मान—**
**मन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ५ ॥**

अक्षरस्यैव दुर्लक्ष्यत्वात्पुनः पुनर्वचनं सुलक्षणार्थम् । यस्मिन्नक्षरे पुरुषे द्यौः पृथिवी चान्तरिक्षं चोतं समर्पितं मनश्च सह प्राणैः करणैरन्यैः सर्वैस्तमेव सर्वाश्रयमेकमद्वितीयं जानथ जानीत हे शिष्याः । आत्मानं प्रत्यक्स्वरूपं युष्माकं सर्वप्राणिनां च ज्ञात्वा चान्या वाचोऽपरविद्यारूपा विमुञ्चथ विमुञ्चत परित्यजत । तत्प्रकाश्यं च सर्वं कर्म ससाधनम् । यतोऽमृतस्यैष सेतुरेतदात्मज्ञानममृतस्यामृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः संसारमहोदधेरुत्तरणहेतुत्वात् । तथा च श्रुत्यन्तरम्—"तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वे. ६।१५) इति ॥ ५ ॥

किंच—

**अरा इव रथनाभौ संहता यत्र नाड्यः**
**स एषोऽन्तश्चरते बहुधा जायमानः ।**
**ओमित्येवं ध्यायथ आत्मानं**
**स्वस्ति वः पराय तमसः परस्तात् ॥ ६ ॥**

---

अग्रिमग्रन्थस्य पौनरुक्त्यं परिहरति-**अक्षरस्यैवेत्यादि** । दुर्लक्ष्यत्वात्-दुर्ज्ञेयत्वात् । सुलक्षणार्थं-सुज्ञानार्थम् । करणैः-इन्द्रियैः । **जानीतेति** । जानीथेत्यपपाठः । **प्रत्यक्स्वरूपमिति** । प्रतिशरीरमञ्चतीति प्रत्यक् । सर्वव्यापिस्वरूपमित्यर्थः । **अपरविद्यारूपा इति** । यज्ञादिप्रतिपादिका ऋग्वेदादयोऽपरविद्यारूपाः । तत्प्रकाश्यं-ऋग्वेदादिप्रतिपाद्यम् । कर्म-यज्ञादि । **ससाधनमिति** । साधनेन ऋत्विग्यविरादिसंपत्त्या सहितम् । **सेतुरिवेति** । 'षिञ् बन्धने' इत्यस्य रूपं सेतुरिति । वृक्षपाषाणादिनिर्मितो मार्गो यथा परतीरप्रापको जलप्रतिबन्धकश्च भवति तथायं परमात्मरूपः सेतुः संसारमहासागरस्य परतीरप्रापकः संसारोदधिनिवारकश्च भवति । सेतुः-महाराष्ट्रभाषायां 'बन्धारा' पदवाच्यः । नतु 'पूल' शब्दवाच्यः । **श्रुत्यन्तरमिति** । श्वेताश्वतरोपनिषदि तृतीयाध्यायेऽष्टमोऽयं मन्त्रः । तस्य पूर्वार्धं इत्थम्-वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ॥ तमेव पुरुषं ज्ञात्वा मृत्युमत्येति अतिक्रामति परब्रह्म गच्छति । अयनाय गमनाय मोक्षायान्यः पन्था मार्गो न विद्यते ॥ ५ ॥

अरा इव। यथा रथनाभौ समर्पिता अरा एवं संहताः संप्रविष्टा यत्र यस्मिन्हृदये सर्वतो देहव्यापिन्यो नाड्यस्तस्मिन्हृदये बुद्धिप्रत्ययसाक्षिभूतः स एष प्रकृत आत्मान्तर्मध्ये चरते चरति वर्तते। पश्यञ्शृण्वन्मन्वानो विजानन्बहुधानेकधा क्रोधहर्षादिप्रत्ययैर्जायमान इव जायमानोऽन्तःकरणोपाध्यनुविधायित्वात्। वदन्ति लौकिका हृष्टो जातः क्रुद्धो जात इति। तमात्मानमोमित्येवमोंकारालम्बनाः सन्तो यथोक्तकल्पनया ध्यायथ चिन्तयत। उक्तं वक्तव्यं च शिष्येभ्य आचार्येण जानता। शिष्याश्च ब्रह्मविद्याविविदिषुत्वान्निवृत्तकर्माणो मोक्षपथे प्रवृत्ताः। तेषां निर्विघ्नतया ब्रह्मप्राप्तिमाशास्त्याचार्यः। स्वस्ति निर्विघ्नमस्तु वो युष्माकं पराय परकूलाय। परस्तात्कस्मादविद्यातमसः। अविद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थः ॥६॥

योऽसौ तमसः परस्तात्संसारमहोदधिं तीर्त्वा गन्तव्यः परविद्याविषय इति स कस्मिन्वर्तत इत्याह।

**यः सर्वज्ञः सर्ववि-**
**द्यस्यैष महिमा भुवि।**

---

**संहता इति**। एकीभूयेत्यर्थः। **देहव्यापिन्य इति**। शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैकेति श्रुतेरेकाधिकशतं नाड्यो हृदये वर्तन्ते तत्रैका शीर्षं गच्छति। अन्याश्च शतसंख्याका देहं व्याप्नुवन्ति। **प्रकृत आत्मेति**। जीवात्मेत्यर्थः। **क्रोधहर्षादिप्रत्ययैरिति**। इष्टहानौ तदलाभे वा क्रोधवृत्तिरुदेति। इष्टप्राप्तौ हर्षवृत्तिरुदेति। प्रत्ययाः–अनुभवाः। **अन्तःकरणोपाध्यनुविधायित्वादिति**। वास्तवरूपेण जीवस्य हर्षक्रोधादिकं नास्ति चैतन्यरूपत्वात्तस्य किन्तु अन्तःकरणोपाधिद्वारा तत् हर्षक्रोधादिकं भासते। यथा आदर्शगतमालिम्ना प्रतिबिम्बे मालिन्यम्। **निवृत्तकर्माण इति**। ब्रह्म जिज्ञासमानो विविदिषुः। तेनापि संन्यासो विधेयः। स विविदिषासंन्यास इति कथ्यते। ब्रह्मज्ञानानन्तरं यः संन्यासः स विद्वत्संन्यासः। यथा याज्ञवल्क्यस्य। विद्वत्संन्यासे संन्यासाश्रमकर्मापि नास्ति। विविदिषासंन्यासे यद्यपि संन्यासाश्रमकर्म त्रिषवणस्नानादिकं कर्तव्यं भवति तथापि तत् गृहस्थाश्रमकर्मापेक्षया न्यूनम्। अतो ब्रह्म विविदिषुणापि संन्यासः कर्तव्यः। **परस्तादिति**। ये च तत्त्वमसीति वाक्यार्थज्ञानद्वारा ब्रह्म जिज्ञासमानाः साधकास्तेषां कर्मठजनसहवासात् कर्मश्रद्धा स्वर्गादिविषयश्रद्धा च भवति सैव वाक्यार्थज्ञानानुभवे प्रतिबन्धको विघ्नः संभवति स मा भूदतो गुरूणामाशीः। वाक्यार्थज्ञानानुभवे संपन्ने तु मोक्षफलप्राप्तौ विघ्नशंकैव नास्तीत्यर्थः। **गमनायेति**। आत्मस्वरूपसंपत्तिरेवात्मस्वरूपगमनम् ॥ ६ ॥

दिव्ये ब्रह्मपुरे ह्येष
व्योम्न्यात्मा प्रतिष्ठितः ॥ ७ ॥

यः सर्वज्ञः सर्वविद्याख्यातः। तं पुनर्विशिनष्टि। यस्यैष प्रसिद्धो महिमा विभूतिः। कोऽसौ महिमा। यस्येमे द्यावापृथिव्यौ शासने विधृते तिष्ठतः। सूर्याचन्द्रमसौ यस्य शासनेऽलातचक्रवदजस्रं भ्रमतः। यस्य शासने सरितः सागराश्च स्वगोचरं नातिक्रामन्ति। तथा स्थावरं जङ्गमं च यस्य शासने नियतम्। तथा चर्तवोऽयने अब्दाश्च यस्य शासनं नातिक्रामन्ति। तथा कर्तारः कर्माणि फलं च यच्छासनात्स्वं स्वं कालं नातिवर्तन्ते स एष महिमा। भुवि लोके यस्य स एष सर्वज्ञ एवंमहिमा देवः। दिव्ये द्योतनवति सर्वबौद्धप्रत्ययकृतद्योतने ब्रह्मपुरे। ब्रह्मणो ह्यत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वात्। ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन्यद्व्योम तस्मिन्व्योम्न्याकाशे हृत्पुण्डरीकमध्यस्थे प्रतिष्ठित इवोपलभ्यते। न ह्याकाशवत्सर्वगतस्य गतिरागतिः प्रतिष्ठा वान्यथा संभवति ॥ ७ ॥

मनोमयः प्राणशरीरनेता
प्रतिष्ठितोऽन्ने हृदयं संनिधाय।
तद्विज्ञानेन परिपश्यन्ति धीरा
आनन्दरूपममृतं यद्विभाति ॥ ८ ॥

---

सर्वेश्वरत्वमनोमयत्वादिगुणविशिष्टब्रह्मणो हृदयपुण्डरीके ध्यानं च क्रममुक्तिफलं सगुणब्रह्मोपासकस्य विधीयत इति दर्शयितुमाह–**योऽसौ तमस इति**। **व्याख्यात इति**। सामान्यविशेषज्ञानवानिति पूर्वं व्याख्यातमित्यर्थः। सर्वविदित्यस्य सर्वं विन्दति लभते इति वार्थः। शासने–आज्ञायाम्। आज्ञयेत्यर्थः। **विधृते तिष्ठत इति**। अन्तरालेऽवलम्बेते। न पतत इत्यर्थः। **अलातचक्रवदिति**। उभयतोऽग्निमुखं काष्ठं मध्ये गृहीत्वा भ्रामयन्ति तदा तदग्निचक्रमिव प्रतीयते। तद्वत् सूर्यचन्द्रौ उभयतोमुखकाष्ठाग्निस्थानीयौ निरन्तरं भ्रमतः। अलातचक्रं महाराष्ट्रभाषायां 'बोथाटी' इति कथ्यते। अजस्रं–निरन्तरम्। स्वगोचरं स्वप्रवृत्तिस्थानम्। सरिदादयः स्वप्रवाहस्थानानि नातिक्रामन्तीत्यर्थः। **सर्वबौद्धेत्यादि**। सर्वैर्दर्शनश्रवणादिज्ञानैः कृतं द्योतनं प्रकाशो यस्मिन्। अत्र हृदयपुण्डरीके। प्रतिष्ठित इत्युक्तौ पूर्वं प्रतिष्ठितो नासीदित्युक्तं स्यात् एवं चेयं पश्चात्स्थितिः सर्वव्यापके ब्रह्मणि न संगच्छेतात आह–**प्रतिष्ठित इवोपलभ्यत इति**। **आकाशवदिति**। 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेः। आगतिः–आगमनम्। प्रतिष्ठा–स्थितिः। अन्यथा–प्रकारान्तरेण। उपलब्ध्यतिरिक्तं तस्य प्रतिष्ठादिकं नास्तीत्यर्थः ॥ ७ ॥

स ह्यात्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत इति मनोमयो मन-उपाधित्वात् । प्राणशरीरनेता प्राणश्च तच्छरीरं च प्राणशरीरं तस्यायं नेता अस्मात्स्थूलाच्छरीराच्छरीरान्तरं सूक्ष्मं प्रति । प्रतिष्ठितोऽवस्थितोऽन्ने भुज्यमानान्नविपरिणामे प्रतिदिनमुपचीयमानेऽपचीयमाने च पिण्डरूपेऽन्ने हृदयं बुद्धिं पुण्डरीकच्छिद्रे संनिधाय समवस्थाप्य । हृदयावस्थानमेव ह्यात्मनः स्थितिर्न ह्यात्मनः स्थितिरन्ने । तदात्मतत्त्वं विज्ञानेन विशिष्टेन शास्त्राचार्योपदेशजनितेन ज्ञानेन शमदमध्यानसर्वत्यागवैराग्योद्भूतेन परिपश्यन्ति सर्वतः पूर्णं पश्यन्त्युपलभन्ते धीरा विवेकिनः । आनन्दरूपं सर्वानर्थदुःखायासप्रहीणं सुखरूपममृतं यद्विभाति विशेषेण स्वात्मन्येव भाति सर्वदा ॥ ८ ॥

अस्य परमात्मज्ञानस्य फलमिदमभिधीयते ।

**भिद्यते हृदयग्रन्थि—**
**श्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि**
**तस्मिन्दृष्टे परावरे ॥ ९ ॥**

हृदयग्रन्थिरविद्यावासनामयो बुद्ध्याश्रयः कामः "कामा येऽस्य हृदि श्रिताः" ( क. ६।१४ ) इति श्रुत्यन्तरात् । हृदयाश्रयोऽसौ

---

**पिण्डरूपेऽन्न इति** । कलावन्नमयाः प्राणा इत्युक्तेरन्नेन विना देहत्यागात् । एवं चान्नेन देहस्य स्थितिः । देहे हृदयस्य स्थितिः । हृदये चात्मनः प्रतिबिम्बद्वारा स्थितिरित्याह—**न ह्यात्मन इति** । **शास्त्राचार्योपदेशजनितेनेति** । शास्त्रं—उपनिषदादिरूपम् । आचार्योपदेशः—तत्त्वमस्यादिवाक्यात्मकः । ज्ञानं—वाक्यार्थज्ञानम् । **शमदमेत्यादि** । साधनचतुष्टयसंपत्तिः प्रथममुण्डकप्रथमखण्डप्रथममन्त्रबालबोधिन्यामुक्ता तत्र शमादीनामर्था आलोच्याः । आयासः—श्रमः । प्रहीणं—रहितम् ॥ ८ ॥

**अस्य परमात्मज्ञानस्येति** । जीवपरमात्मैक्यबोधकवाक्यार्थानुभवो जीवन्मुक्तिफलकः । तथोपासनं क्रममुक्तिफलकम् । तस्य द्विविधस्यापि परमात्मज्ञानस्य फलमभिधीयत इत्यर्थः । **हृदयग्रन्थिरिति** । अत्रान्वयक्रमेण व्याख्यानम् । भिद्यत इति पदस्याग्रे व्याख्यानात् । तेन क्वचित्पुस्तके पूर्वं भिद्यत इति यत्पठितं तत प्रामादिकम् । **अविद्यावासनामय इति** । अविद्यारूपस्तज्जनितवासनारूपश्च । **बुद्ध्याश्रय इति** । अत्र बुद्धिपदेन हृदयमभिधीयते । तत्र प्रमाणं 'कामा येऽस्य' इति श्रुतिस्तदाह—**श्रुत्यन्तरादिति** । **हृदयाश्रय इति** । असौ कामो हृदयाश्रयः । नैयायिकनये कामादयः चतुर्दशात्मविशेषगुणा उच्यन्ते तेन तेषामात्माश्रयत्वं स्यादिति शंकामपाकर्तुमाह—**नात्माश्रय इति** ।

नात्माश्रयः । भिद्यते मेदं विनाशमायाति । छिद्यन्ते सर्वज्ञेयविषयाः संशया

'कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' इति श्रुतौ (बृ. १-४-३ मै. ६-३०) मनस इमा वृत्तयः कथिता न त्वात्मनः। **विनाशमायातीति** । अविद्यावासनामयः कामो भिद्यत इत्यत्रायं विचारः। किं ज्ञानेन बुद्धौ विद्यमानायां तदाश्रितः कामो भिद्यते। उत बुद्धिविनाशेन कामो भिद्यते। प्रथमपक्षो न संगच्छते उपादानकारणे बुद्धौ विद्यमाने कार्यस्यात्यन्तं नाशादर्शनात्। मृदि विद्यमानायां पुनर्घटकरणसंभवः। बुद्धिनाशेन कामो भिद्यत इति द्वितीयोऽपि पक्षो न संगच्छते। ज्ञानस्याज्ञानेन सह विरोधात्। तथाहि ज्ञानेनाज्ञानं नश्येन्न तु बुद्धिः। किंच बुद्धिर्यदि अनादिस्तर्हि 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुतिविरोधः। यदि बुद्धिः सादिस्तर्हि सर्वसादिवस्तूनां पृथिव्यादीनां यथा महाप्रलयकाले नाशस्तदा बुद्धेरपि नाशः स्यात्तर्हि ज्ञानस्य वैयर्थ्यं तेन विनापि प्रलयेऽनायासतो बुद्धिनाशसिद्धेः। किंच सादित्वे बुद्धेरुपादानं किं ब्रह्म वा माया वा। ब्रह्मण उच्छेदासंभवाद्बुद्धेरुच्छेदाभावात्। न द्वितीयः। द्रष्टृगतज्ञानेन मायाया उच्छेदासंभवात्। लौकिकमायाविगतमायाया द्रष्टृगतज्ञानेनोच्छेदादर्शनात्। किंच बुद्धेरुच्छेदो न बुद्धिफलं स्वनाशः स्वस्य फलमित्यस्य लोकेऽदृष्टत्वात्। तथाच बुद्धिनाशो नात्मनः फलम्। केवलात्मस्थितौ बुद्धेः स्थित्यभावात्। किंचात्मनोऽविद्याद्यनाश्रयत्वकथनं श्रुतिविरुद्धम्। यतोऽत्रोपक्रमे 'अविद्यायामन्तरे वर्तमानाः' इति। उपसंहारे 'अनीशया शोचति मुह्यमानः' इति च श्रूयते। बुद्धिगतमेवाविद्यादि आत्मनि अध्यस्यत इति चेद्ब्रूषे तर्हि अध्यस्यत इत्यस्य कोऽर्थः। निक्षिप्यते भ्रान्त्या दृश्यते वा। नाद्यः। अन्यधर्मस्यान्यत्र निक्षेपासंभवात्। भ्रान्त्या चेत्केन दृश्यते। न तावदात्मना। सिद्धान्ते तस्याविद्याश्रयत्वानंगीकारात्। नापि बुद्ध्या भ्रान्त्या दृश्यते। बुद्धेरात्माविषयत्वासंभवेन स्वगतस्याविद्यादेर्दर्शनासंभवात्। नहि सुशिक्षितोऽपि नटः स्वस्कन्धमारोढुं समर्थः। इति न्यायात्। किंच बुद्धेर्भ्रान्तिर्बुद्धिगतेन तत्त्वानुभवेन निवर्तत इति प्रसिद्धेर्बुद्धेरनुभवाश्रयत्वप्रसंगात्। तस्मादस्य भाष्यस्य किं सुविचारसहं तात्पर्यमिति चेदुच्यते। अत्र सिद्धान्तमते विवर्तवादः। स च शुक्तिरजतादिदृष्टान्ते स्फुटः। तेन च चित्तत्रानादिरनिर्वाच्याविद्या चैतन्यमवच्छिद्य स्वावच्छिन्नचैतन्यस्य बुद्ध्यादितादात्म्यरूपेण विवर्तते। तस्याश्चित्तत्राविद्याया ब्रह्मात्मतानुभवान्निवृत्तिः। तन्निवृत्तौ तज्जन्यहृदयग्रन्थिर्भिद्यत इति श्रुत्योच्यते। भाष्ये बुद्ध्याश्रय इत्यत्र बुद्धिपदेनाहंकारो गृह्यते। अहंकाराश्रयः काम इत्यर्थः। अविद्याया वर्णनं च व्यावहारिकसत्यत्वाभिप्रायेण। कामो नात्माश्रय इति कथनं निर्विकार आत्मेत्यभिप्रायेणेति। ननु जीवन्मुक्तेन व्युत्थानदशायां जगद्व्यवहारोऽनुभूयते तदसंगतं स्यात्। ज्ञाने सति जगतो नाशावश्यंभावादिति चेन्न। बाधितानुवृत्त्या प्रारब्धकर्मोपभोगार्थं जगद्व्यवहारस्यावश्यकत्वात्। तथाहि—यथा दग्धापि रज्जुः पूर्वरूपेण भासते परं न तया बन्धनादिव्यवहारः कर्तुं पार्यते तद्वत् जीवन्मुक्तेन पूर्ववद्भिक्षाटनादिकर्म क्रियते प्रार-

लौकिकानामामरणात् गङ्गास्रोतोवत्प्रवृत्ता विच्छेदमायान्ति। अस्य विच्छिन्नसंशयस्य निवृत्ताविद्यस्य यानि विज्ञानोत्पत्तेः प्राक्तनानि जन्मान्तरे चाप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च क्षीयन्ते कर्माणि। न त्वेतज्जन्मारम्भकाणि प्रवृत्तफलत्वात्। तस्मिन्सर्वज्ञेऽसंसारिणि परावरे परं च कारणात्मना, अवरं च कार्यात्मना तस्मिन्परावरे साक्षादहमस्मीति दृष्टे, संसारकारणोच्छेदान्मुच्यत इत्यर्थः ॥९॥

उक्तस्यैवार्थस्य संक्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि।

हिरण्मये परे कोशे
विरजं ब्रह्म निष्कलम्।

---

ब्धानुसारं यावज्जीवम्। परं तस्य प्रतिबन्धकत्वं नास्ति। अविद्याया नाशात्। **गंगास्रोतोवदिति**। अनावृष्टयामपि गंगायाः प्रवाहो न विच्छिद्यते। अतो गंगाग्रहणम्। **अस्येति**। ज्ञानिन इत्यर्थः। विज्ञानं-अनुभवजन्यं ज्ञानं न केवलं शास्त्रीयम्। **प्राक्तनानीति**। त्रिविधं हि कर्म। १ संचितम् २ क्रियमाणम् ३ प्रारब्धमिति। तत्र १ संचितं पूर्वेष्वनेकजन्मसु कृतं फलोपभोगाय नाद्याप्यारब्धम्। २ क्रियमाणं प्रारब्धोपभोगसमये यदन्यत्क्रियते कर्म तत्। ३ प्रारब्धं-पूर्वसंचितान्तर्गतमेव प्रकृतजन्मोपभोगार्थं विभज्य स्थापितम्। **जन्मान्तर इति**। अन्यस्मिन् जन्मनि अप्रवृत्तफलानि येषां फलोपभोगो नासादितः। संचितानीत्यर्थः। **ज्ञानोत्पत्तिसहभावीनीति**। ज्ञानोत्पत्तिर्यत्र जन्मनि तत्र ज्ञानोत्पत्तेरुत्तरं जायमानानीत्यर्थः। क्रियमाणसंज्ञकानीति भावः। इदमुपलक्षणम्। प्रारब्धोपभोगसमये ज्ञानाभावदशायामुत्पद्यमानानामपि कर्मणां क्रियमाणसंज्ञकत्वात्। **एतज्जन्मारम्भकाणीति**। प्रारब्धानीत्यर्थः। **प्रवृत्तफलत्वादिति**। ननु कर्ममात्रस्याप्यज्ञानकार्यत्वे सिद्धे कारणनाशात्प्रारब्धस्यापि संचितादिवन्निवृत्तिः स्यादेवेति चेन्न। प्रवृत्तफलत्वात्तस्य निवृत्त्यनुपपत्तेः। यथा भुक्तेः पूर्वभाविनः पश्चाद्भाविनोऽप्यन्नस्य त्याग उपपद्यते न तथा भुक्तान्नस्य प्रवृत्तफलत्वात्। तथैवारब्धकर्मणोऽपि। एवंच भुक्तान्नस्य प्रवृत्तफलस्य यथोपभोगेनैव क्षयस्तथा प्रारब्धकर्मणामुपभोगेनैव क्षयः। अत्रार्थे मुक्तेषुः प्रवृत्तं चक्रमित्यपि दृष्टान्तद्वयम्। मृगयायां पशुवधार्थं मुक्त इषुर्लक्ष्यवेधं कृत्वापि यावद्वेगक्षयमग्रे गच्छत्येव। प्रवृत्तं कुलालचक्रं घटनिर्माणकार्यं संपाद्यापि यावद्वेगं भ्रमत्येव। परावरे-कार्यकारणात्मके। दृष्टे-अनुभूते। **संसारेत्यादि**। संसारस्य कारणमविद्या तदुच्छेदात् तन्नाशादित्यर्थः ॥ ९ ॥

पुनरुक्तिं परिहर्तुमाह-**उक्तस्यैवेति**। **संक्षेपाभिधायका इति**। संक्षेपभि-

तच्छुभ्रं ज्योतिषां ज्योति-
स्तद्यदात्मविदो विदुः ॥ १० ॥

हिरण्मये ज्योतिर्मये बुद्धिविज्ञानप्रकाशे परे कोशे कोश इवासेः । आत्मस्वरूपोपलब्धिस्थानत्वात्परं तत्सर्वाभ्यन्तरत्वात्तस्मिन्विरजमविद्याद्यशेषदोषरजोमलवर्जितं ब्रह्म सर्वमहत्त्वात्सर्वात्मत्वाच्च निष्कलं निर्गताः कला यस्मात्तन्निष्कलं निरवयवमित्यर्थः । यस्माद्विरजं निष्कलं चातस्तच्छुभ्रं शुद्धं ज्योतिषां सर्वप्रकाशात्मनामग्न्यादीनामपि तज्ज्योतिरवभासकम् । अग्न्यादीनामपि ज्योतिष्ट्वमन्तर्गतब्रह्मात्मचैतन्यज्योतिर्निमित्तमित्यर्थः । तद्धि परं ज्योतिर्यदन्यानवभास्यमात्मज्योतिस्तद्यदात्मविद आत्मानं स्वं शब्दादिविषयबुद्धिप्रत्ययसाक्षिणं ये विवेकिनो विदुर्विजानन्ति त आत्मविदस्तद्विदुरात्मप्रत्ययानुसारिणः । यस्मात्परं ज्योतिस्तस्मात्त एव तद्विदुर्नेतरे बाह्यार्थप्रत्ययानुसारिणः ॥ १० ॥

कथं तत् "ज्योतिषां ज्योतिः" इत्युच्यते ।

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥ ११ ॥

---

राम्यामुक्तोऽर्थः सुखेन बुद्ध्यारूढो भवतीति भावः । **बुद्धिविज्ञानप्रकाश इति** । बुद्धेः शास्त्रीयज्ञानस्य विज्ञानस्य अनुभवजन्यज्ञानस्य च प्रकाशो यस्मिन् । परे-उत्कृष्टे । **कोश इवेति** । यथा खड्गं कोशे महाराष्ट्रभाषया 'म्यान' इति संज्ञके निधीयते तद्वदित्यर्थः। तत् स्थानमात्मोपलब्धिस्थानत्वादुत्कृष्टमथवा सर्वतोऽभ्यन्तरत्वात्सुगुप्तत्वेनोत्कृष्टम् । **विरजमिति** । रजःशब्दस्याकारान्तत्वमार्षम् । अथवा ये सान्तास्तेऽदन्ता इति न्यायेन तस्य साधुत्वं बोधनीयम् । **अविद्याद्यशेषेति** । अत्रादिपदेन कामकर्मादयो दोषा ग्राह्याः । **अन्यानवभास्यमिति** । अन्यैरग्न्यादिभिरवभासयितुं प्रकाशयितुमशक्यमित्यर्थः । अग्न्यादयो हि ब्रह्मरूपेणान्तर्ज्योतिषावभास्यन्ते ब्रह्म तु सर्वान्तर्गतत्वान्न केनाप्यवभासयितुं शक्यम् । **शब्दादीत्यादि** । शब्दस्पर्शरूपरसगन्धानां बुद्धिप्रत्ययानां साक्षी जीवरूपेणात्मैव । **विवेकिन इति** । विचिर् पृथग्भावे ' इति धातुः । अयं शब्दादिविषयः, इदं ब्रह्म निर्विषयमिति पार्थक्येन ये विचारयन्ति । **बाह्यार्थप्रत्ययानुसारिणः**-बाह्यार्थप्रत्ययमनुविधीयमानाः ॥ १० ॥

न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति, तद्ब्रह्म न प्रकाशयतीत्यर्थः । स हि तस्यैव भासा सर्वमन्यदनात्मजातं प्रकाशयति । न तु तस्य स्वतः प्रकाशनसामर्थ्यम् । तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरस्मद्गोचरः । किं बहुना । यदिदं जगद्भाति तत्तमेव परमेश्वरं स्वतो भारूपत्वाद्भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा जलोल्मुकादि वाग्निसंयोगादग्निं दहन्तमनुदहति न स्वतस्तद्वत्तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि जगद्विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च कार्यगतेन विविधेन भासा अतस्तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि स्वतोऽविद्यमानं भासनमन्यस्य कर्तुं शक्नोति । घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणां चादित्यादीनां तद्दर्शनात् ॥ ११ ॥

यत्तज्ज्योतिषां ज्योतिर्ब्रह्म तदेव सत्यम् । सर्वं तद्विकारः । वाचारम्भणं विकारो नामधेयमात्रमनृतमितरदित्येतमर्थं विस्तरेण हेतुतः प्रतिपादितं निगमनस्थानीयेन मन्त्रेण पुनरुपसंहरति ।

**ब्रह्मैवेदममृतं पुरस्ता-**
**द्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।**
**अधश्चोर्ध्वं च प्रसृतं**
**ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ १२ ॥**

**इत्यथर्ववेदीयमुण्डकोपनिषदि द्वितीयमुण्डके द्वितीयः खण्डः ॥ २ ॥**

**इत्यथर्ववेदीयमुण्डकोपनिषदि द्वितीयमुण्डकं समाप्तम् ॥ २ ॥**

---

**सर्वावभासक इति** । घटपटादीनां लौकिकानां सर्ववस्तूनामवभासकः सूर्यः । स ब्रह्मावभासको न भवति यतस्तस्य स्वरूपमेव ब्रह्म । यदि स स्वरूपभूतं ब्रह्म प्रकाशयेत्तर्हि प्रकाशनस्य ब्रह्म कर्म स्यात् । प्रकाशनस्य कर्तृ ब्रह्म । एवं चैकत्रैव कर्तृत्वं कर्मत्वं च समापतेत् । तत् स्वस्य स्वस्कन्धारोहणमिवासंगतं स्यात् । **अनात्मजातमिति** । आत्मभिन्नं घटपटादिसमुदायमित्यर्थः । **अस्मद्गोचर इति** । सूर्यचन्द्रतारकादीनां दूरस्थत्वात्तत्स्वरूपं शास्त्रगम्यम् । अग्निस्तु अस्मत्सविधे वर्तते तेन तत्स्वरूपं प्रकाशनादिकं चास्माभिरुपलभ्यत इत्यर्थः । **कार्यगतेनेति** । सूर्यचन्द्रादि यद्ब्रह्मकार्यं तत्स्थेन तेजसेत्यर्थः । **स्वतोऽविद्यमानामिति** । स्वयमसिद्धः परान्कथं साधयेत् । इति । स्वयं तरितुमक्षमः परान्कथं तारयेदिति वा न्यायः । **घटादीनामिति** । घटादयः प्रकाशरहितत्वादन्यान्नावभासयन्ति । आदित्यादयः प्रकाशरूपत्वादन्यान्भासयन्तीत्यर्थः ॥ ११ ॥

ब्रह्मैवैकं परमार्थसत्यमिति निगमनस्थानीयेन मन्त्रेणोपसंहरति—**यत्तदिति** । **निगम**

ब्रह्मैवोक्तलक्षणम् इदं यत्पुरस्तादग्रेऽब्रह्मैवाविद्यादृष्टीनां प्रत्यवभासमानं तथा पश्चाद्ब्रह्म तथा दक्षिणतश्च तथोत्तरेण तथैवाधस्तादूर्ध्वं च सर्वतोऽन्यदिव कार्याकारेण प्रसृतं प्रगतं नामरूपवदभासमानम् । किं बहुना, ब्रह्मैवेदं विश्वं समस्तमिदं जगद्वरिष्ठं वरतमम् । अब्रह्मप्रत्ययः सर्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्ययः । ब्रह्मैवैकं परमार्थसत्यमिति वेदानुशासनम् ॥ १२ ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये द्वितीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये द्वितीयं मुण्डकं समाप्तम् ॥ २ ॥

---

**नस्थानीयेनेति** । अनुमानप्रतिपादने पञ्च वाक्यानि भवन्ति प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्यानि तत्र पञ्चमं वाक्यं निगमनं नाम । तेनानुमानसिद्धार्थस्योपसंहारः क्रियते । तद्वदत्रापि प्रकरणेन सिद्धं यद्ब्रह्मैव सत्यम् । अन्यत्सर्वं तद्विकार इति तस्योपसंहारः क्रियते । अनुमानवाक्यानि चेत्थम् । १ पर्वतो वन्हिमानिति प्रतिज्ञा । २ धूमादिति हेतुः । ३ यथा महानसः । इति उदाहरणम् । ४ अयमपि तथा । इत्युपनयः । ५ तस्मात्तथा । इति निगमनम् । **पुनरुपसंहरतीति** । पूर्वखण्डान्तिममन्त्र उपसंहारः कृतः पुनरत्र क्रियत इत्यर्थः । **अविद्यादृष्टीनामिति** । यथा पित्तरोगोपहतदृष्टयः शंखं पीतं मन्वते तद्वत् अविद्योपहतदृष्टयः ब्रह्म जगद्रूपेण पश्यन्ति भ्रमादित्यर्थः । **कार्याकारेणेति** । घटपटादिस्वरूपेण । **नामरूपवदिति** । घटपटादिषु जगद्वस्तुषु पञ्चकं भासते तत्र त्रयं सत्यं द्वयमसत्यम् । तेनेदं जगत्सत्यानृतमयम् । तथा च शारीरकमीमांसायामध्यासभाष्ये–सत्यानृते मिथुनीकृत्य नैसर्गिकोऽयं लोकव्यवहारः । इति । पूर्वोक्तं पञ्चकं चेत्थम् । अस्ति, भाति, प्रियं, रूपं, नाम चेति तत्र प्रथमं त्रिकं ब्रह्मरूपं तेन सत्यम् । ततो द्वयं जगद्रूपं तेनासत्यम् । तथा चोक्तम्–अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ १ ॥ अब्रह्मप्रत्ययः–जगत्प्रत्ययः । अविद्यामात्रः–केवलाविद्यारूपः । वेदानुशासनं–वेदाज्ञा । अपरिहरणीयेत्यर्थः । ननु यदीदं जगदसत्यं तर्हि सर्वमिदं जगद्ब्रह्मैवेति सामानाधिकरण्यं कथं क्रियते यथा नीलो घट इति सामानाधिकरण्यं सत्ययोर्नीलत्वघटत्वयोः संभवति तद्वदत्रापि जगतः सत्यत्वस्यावश्यकत्वमिति चेन्न । बाधायामपि सामानाधिकरण्यस्य सर्वैरंगीकृतत्वात् । तथाहि–योऽयं स्थाणुः पुरुषोसौ’ इति वाक्ये पूर्वरात्रौ दूरस्थत्वात् पुरुषबुद्ध्या भीतं बालं प्रातः समीपं गत्वा पुरुषबुद्धिं निराकर्तुं स्थाणुपुरुषयोः सामनाधिकरण्यं क्रियते तत्पित्रा तद् बाधायां सामानाधिकरण्यं तत्र द्वयोरन्यतरस्य पुरुषस्य सत्यत्वाभावेऽपि यथा सामानाधिकरण्यं तद्वज्जगद्ब्रह्मणोरन्यतरस्य जगतो मिथ्यात्वेऽपि सामानाधिकरण्यं संभवत्येव । अयं स्थाणुः पुरुषोऽसाविति वाक्ये इदंशब्दः समीपस्थत्ववाची । अदस् शब्दो दूरस्थत्ववाची । तथा चोक्तम्–इदमस्तु संनिकृष्टे समीपतरवाचि चैतदो रूपम् ।

परा विद्योक्ता यया तदक्षरं पुरुषाख्यं सत्यमधिगम्यते। यदधिगमे हृदयग्रन्थ्यादिसंसारकारणस्यात्यन्तिकविनाशः स्यात्। तद्दर्शनोपायश्च योगो धनुराद्युपादानकल्पनयोक्तः। अथेदानीं तत्सहकारीणि सत्यादिसाधनानि वक्तव्यानीति तदर्थम् उत्तरग्रन्थारम्भः। प्राधान्येन तत्त्वनिर्धारणं च प्रकारान्तरेण क्रियते अत्यन्तदुरवगाहत्वात्कृतमपि। तत्र सूत्रभूतो मन्त्रः परमार्थवस्त्ववधारणार्थमुपन्यस्यते।

**द्वा सुपर्णा सयुजा सखाया**
**समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्य-**
**नश्नन्नन्यो अभिचाकशीति॥ १॥**

द्वा द्वौ सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ पक्षिसामान्याद्वा सुपर्णौ

---

अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्॥ १॥ अन्वयव्यतिरेकाभ्यां जगद् ब्रह्मणि वर्तत इति सिद्धम्॥१२॥

**इति श्रीमुण्डकोपनिषद्भाष्ये बालबोधिन्यां द्वितीयमुण्डके द्वितीयः खण्डः॥**

**यदधिगम इति**। पुरुषाख्याक्षरप्राप्तावित्यर्थः॥ आत्यन्तिकविनाशः–अत्यन्ताभावः। **तद्दर्शनेत्यादि**। तस्य पुरुषस्य दर्शनं ज्ञानम्। **धनुराद्युपादानेत्यादि**। उपादानं ग्रहणम्। **उक्त इति**। धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं संदधीत। आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि॥ इति द्वितीयमुण्डके द्वितीयखण्डे तृतीयमन्त्रेणोक्तः। **तत्सहकारीणीति**। कार्ये कारणत्रयं भवति १ उपादानकारणम् २ निमित्तकारणम् ३ सहकारिकारणम्। इति। यथा घटे मृत् उपादानकारणम्। दण्डः निमित्तकारणम्। वस्त्रखण्डः सहकारिकारणम्। तथात्र सत्यादीनि सहकारिकारणानि। **प्राधान्येनेति**। कृतमपि प्राधान्येन तत्त्वनिर्धारणमत्यन्तदुरवगाहत्वात् प्रकारान्तरेण क्रियत इत्यन्वयः। प्राधान्येन–तात्पर्यविषयतया। तत्त्वनिश्चय एव तात्पर्यभूतोऽत्र प्रतिपाद्यः। तस्य दुरवगाहत्वात् दुर्ज्ञेयत्वात् पुनः प्रकारान्तरेण कथनमित्यर्थः। **सूत्रभूत इति**। प्रथमो मन्त्रः सूत्रभूतः। तदग्रिमा मन्त्रा भाष्यभूताः। संक्षेपविस्तराभ्यामुक्तोऽर्थः शीघ्रं बुद्ध्यारूढो भवतीत्यर्थः। सूत्रमयकथनं संक्षेपात्मकम्। भाष्यमयकथनं विस्तारात्मकम्। सूत्रभाष्यलक्षणं तु पूर्वमुक्तम्। अवधारणं–निश्चयः। 'द्वौ सुपर्णौ सयुजौ सखायौ' इति चतुर्षु रूपेषु-औ इत्यस्य स्थान आकारश्छान्दसः। **शोभनपतनाविति**। जीवस्याज्ञत्वेन नियम्यत्वयोग्यत्वात् ईश्वरस्य सर्वज्ञत्वेन नियामकत्वशक्तियोगात् शोभनम् उचितं नियम्यनियामकभावगमनं ययोस्तौ शोभनपतनौ। **पक्षिसामान्याद्वेति**। वृक्षाश्रयणादिरूपपाक्षि-

सयुजा सयुजौ सहैव सर्वदा युक्तौ सखाया सखायौ समानाख्यानौ समानाभिव्यक्तिकारणावेवंभूतौ सन्तौ समानमविशेषमुपलब्ध्यधिष्ठानतया, एकं वृक्षं वृक्षमिवोच्छेदनसामान्याच्छरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ। सुपर्णाविवैकं वृक्षं फलोपभोगार्थम्। अयं हि वृक्ष ऊर्ध्वमूलोऽवाक्शाखोऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसंज्ञकः सर्वप्राणिकर्मफलाश्रयस्तं परिष्वक्तौ सुपर्णाविवाविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ। तयोः परिष्वक्तयोरन्य एकः क्षेत्रज्ञो लिङ्गोपाधिवृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वाद्वनेकविचित्रवेदनास्वादरूपं स्वाद्वत्ति भक्षयत्युपभुंक्तेऽविवेकतः। अनश्नन्नन्य इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सत्त्वोपाधिरीश्वरो नाश्नाति। प्रेरयिता ह्यसावुभयोर्भोज्यभोक्त्रोर्नित्यसाक्षित्वसत्तामात्रेण। स त्वनश्नन्नन्योऽभिचाकशीति पश्यत्येव केवलम्। दर्शनमात्रं हि तस्य प्रेरयितृत्वं राजवत् ॥ १ ॥

---

धर्मसाजात्यादित्यर्थः। **उच्छेदनसामान्यादिति**। 'ओव्रश्चू छेदने' इति धातो रूपम्। वृश्च्यते छिद्यत इति वृक्षः शरीरम्। **ऊर्ध्वमूल इति**। ऊर्ध्वम् उत्कृष्टं ब्रह्म मूलमधिष्ठानं यस्येति। **अवाक्शाख इति**। अवाञ्चः–ब्रह्मापेक्षया निकृष्टाः प्राणादयः शाखा यस्य। **अश्वत्थ इति**। श्वः न तिष्ठतीत्यश्वत्थः। **अव्यक्तमूलप्रभव इति**। अव्यक्तम् अव्याकृतम् मूलमुपादानं समवायिकारणं तस्मात् प्रभवति। यावदज्ञानं तावत्कालपर्यन्तं स्थायीत्यर्थः। **अविद्याकामेत्यादि**। अविद्याकामकर्मवासनानामाश्रयः स एव लिंगम् उपाधिर्यस्य तादृश आत्मा जीवाख्यः। परमात्मैव अविद्याश्रयलिंगोपाधिना जीवसंज्ञां भजत इत्यर्थः। **लिंगोपाधीत्यादि**। लिंगदेहोपाधिमाश्रित इत्यर्थः। विचित्राः विविधाः। वेदनाः–दुःखानि। आस्वादः–माधुर्यम्। अविवेकतः–अज्ञानात्। **सत्त्वोपाधिरिति**। सत्त्वं मायाख्यमुपाधिरस्येति। मायोपाधिरीश्वरः। अविद्योपाधिर्जीवः। **सत्तामात्रेणेति**। केवलास्तित्वेनेत्यर्थः। यथा दीपो गृहपतिं चौरं वा तत्तदभिमतकर्माणि प्रेरयति केवलास्थित्यैव तथेश्वरः। **राजवदिति**। यथा राजा केवलदर्शनमात्रेण भृत्यान् प्रयोजयति। अयं भावः। किंचित्स्नानादिकर्म चिकीर्षु राजा भृत्यानालोकयत्येव केवलम्। भृत्यास्तु तन्मनोगतं ज्ञात्वैव तत्कार्यं कुर्वन्ति। केवलं दर्शनमात्रेण प्रवर्तकत्व एवायं दृष्टान्तः। राजा यथा भृत्यकृतकार्यस्य फलभोक्ता भवति तथा तु परो जीवकृतस्य फलभोक्ता न भवतीति विज्ञेयम् ॥ १ ॥

तत्रैवं सति

> समाने वृक्षे पुरुषो निमग्नोऽ-
> नीशया शोचति मुह्यमानः ।
> जुष्टं यदा पश्यत्यन्यमीश-
> मस्य महिमानमिति वीतशोकः ॥ २ ॥

समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्ता जीवोऽविद्याकामकर्मफल-रागादिगुरुभाराक्रान्तोऽलाबुरिव सामुद्रे जले निमग्नो निश्चयेन देहात्मभाव-मापन्नोऽयमेवाहममुष्य पुत्रोऽस्य नप्ता कृशः स्थूलो गुणवान्निर्गुणः सुखी दुःखीत्येवं प्रत्ययो नास्त्यन्योऽस्मादिति जायते म्रियते संयुज्यते वियुज्यते च संबन्धिबान्धवैः । अतोऽनीशया न कस्यचित्समर्थोऽहं, पुत्रो मम विनष्टोऽ-मृता मे भार्या, किं मे जीवितेनेत्येवं दीनभावोऽनीशा तया शोचति संत-प्यते मुह्यमानोऽनेकैरनर्थप्रकारैरविवेकतयान्तश्चिन्तामापद्यमानः स एवं प्रेत-तिर्यङ्मनुष्यादियोनिष्वाजवं जवीभावमापन्नः कदाचिदनेकजन्मसु शुद्धधर्म-

---

अलाबुरिवेति । अलाबुः–तुम्बीफलम् । महाराष्ट्रभाषायां 'भोपळा' इति प्रसिद्धम् । अलाबुफलं जलतरणसमर्थमपि पाषाणादिगुरुभाराक्रान्तं सत् जले निमज्जति केनचित्तद्भारेऽपनीते पुनर्जले तरति तद्वज्जीवः स्वयं ब्रह्मरूपत्वेन मुक्तोऽपि अविद्याकाम-कर्मादिगुरुभाराक्रान्तः सन् संसारसमुद्रे निमज्जति पश्चात्संचितसुकर्मवशात् कारुणिकेन गुरुणा भाराद्यपनीय दर्शितयोगमार्गः क्रमेण वीतशोको भवति । इदमत्र ध्येयम् । १ आवरणम् २ विक्षेप इति शक्तिद्वयमविद्यायाः । तत्रेश्वरभावाप्रतिपत्तिरूपा, अनीशा–आव-रणम् । शोचतीति विक्षेपः । तदुभयहेतुरनिर्वाच्यमज्ञानं मोहः । तेन विशिष्टोऽहंकरोमी-त्यादिभिरनेकप्रकारैरविवेकितामापद्यते जीवः । ततः स देहमेवात्मत्वेन प्रतिपद्यते तदाह–**देहात्मभावमापन्न इति** । नप्ता–पौत्रः । एवंप्रत्ययः–एवंज्ञानः । **संयुज्यते वियुज्यते चेति** । तथा चोक्तं–यथा काष्ठं च काष्ठं समेयातां महोदधौ । समेत्य च व्यपेयातां तद्व-द्भूतसमागमः ॥ इति । **अनीशयेति** । ईश्वरभावाप्रतिपत्त्या सामर्थ्याभावेनेत्यर्थः । **अन्तश्चिन्तामिति** । तस्यान्तःकरणे पुत्रविनाशादिजा चिन्ता जायत इत्यर्थः । प्रेताः–पिशाचाः । तिर्यञ्चः—पशुपक्षिणः । **आजवमिति** । अनवरतम् । जवीभावं–निकृष्ट-भावम् । लक्षणया लघुभावमित्यर्थः । **आपन्न इति** । कर्मरूपेण वायुना प्रेरितो लघु-भावात्क्षैप्यमापन्नः स एव जीवः वीतशोको भवतीति संबन्धः । अयं भावः । यत्कर्म-वायुप्रेरितः स एव शोचन् जीवो वक्ष्यमाणप्रकारेण वीतशोको भवतीत्यर्थः । **अनेकजन्म-**

संचितनिमित्ततः केनचित्परमकारुणिकेन दर्शितयोगमार्गोऽहिंसासत्यब्रह्मचर्यसर्वत्यागशमदमादिसंपन्नः समाहितात्मा सञ्जुष्टं सेवितमनेकैर्योगमार्गैः कर्मिभिश्च यदा यस्मिन्काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणाद्विलक्षणमीशमसंसारिणमशनायापिपासाशोकमोहजरामृत्य्वतीतमीशं सर्वस्य जगतोऽयमहमस्म्यात्मा सर्वस्य समः सर्वभूतस्थो नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानं च जगद्रूपमस्यैव मम परमेश्वरस्येति यदैवं द्रष्टा, तदा वीतशोको भवति सर्वस्माच्छोकसागराद्विप्रमुच्यते कृतकृत्यो भवतीत्यर्थः ॥ २ ॥

अन्योऽपि मन्त्र इममेवार्थमाह सविस्तरम् ।

**यदा पश्यः पश्यते रुक्मवर्णं**
**कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा विद्वान्पुण्यपापे विधूय**
**निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥**

यदा यस्मिन्काले पश्यः पश्यतीति विद्वान्साधक इत्यर्थः । पश्यते पश्यति पूर्ववद्रुक्मवर्णं स्वयंज्योतिःस्वभावं रुक्मस्येव वा ज्योतिरस्याविनाशि । कर्तारं सर्वस्य जगत ईशं पुरुषं ब्रह्मयोनिं ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिस्तं ब्रह्मयोनिं ब्रह्मणो वापरस्य योनिं स यदा चैवं पश्यति तदा स विद्वान्पश्यः पुण्यपापे बन्धनभूते कर्मणी समूले विधूय निरस्य दग्ध्वा निरञ्जनो निर्लेपो

---

**स्विति** । बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ' इति भगवदुक्तेः । **परमकारुणिकेनेति** । परमदयालुना गुरुणेत्यर्थः । सर्वत्यागः—संन्यासः । समाहितात्मा—शान्तचित्तः । **वृक्षोपाधिलक्षणादिति** । शरीरोपाधिलक्षणो जीवस्ताद्भिन्नमित्यर्थः । अशनाया—भोक्तुमिच्छा । पिपासा—पानेच्छा । अतीतं—अतिक्रान्तम् । अशनायादिरहितमित्यर्थः । **अविद्याजनितेत्यादि** । अविद्यया जनित उत्पादितः शरीरादिरूप उपाधिः तेन परिच्छिन्नः पृथक्कृतः । मायात्मा—मायास्वरूपः । वीतशोकः—विगतशोकः । **कृतकृत्य इति** । परमेश्वरज्ञानरूपं कृत्यं कृतं संपादितं येनेत्यर्थः ॥ २ ॥

**इममेवेति** । तत्त्वस्य दुर्ज्ञेयत्वात्पुनरुक्तिरतो न दोषाय । अविनाशि—नित्यम् । **अपरस्येति** । लक्षणया सगुणब्रह्मणः कारणभूतमित्यर्थः । **पश्य इति** । ' दृशिर् प्रेक्षणे ' इत्यस्य रूपम् । **बन्धनभूते इति** । पापकर्मवत् पुण्यकर्मापि बन्धकमेव जन्मकारण-

विगतक्लेशः परमं प्रकृष्टं निरतिशयं साम्यं समतामद्वयलक्षणाम्, द्वैतविषयाणि ह्यर्वाञ्च्येवातोऽद्वयलक्षणमेतत्परमं साम्यमुपैति प्रतिपद्यते ॥ ३ ॥

किंच—

प्राणो ह्येष यः सर्वभूतैर्विभाति
विजानन्विद्वान्भवते नातिवादी ।
आत्मक्रीड आत्मरतिः क्रियावा-
नेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥

योऽयं प्राणस्य प्राणः पर ईश्वरो ह्येष प्रकृतः सर्वैर्भूतैर्ब्रह्मादिस्तम्बपर्यन्तैः । इत्थंभूतलक्षणे तृतीया । सर्वभूतस्थः सर्वात्मा सन्नित्यर्थः । विभाति विविधं दीप्यते । एवं सर्वभूतस्थं यः साक्षादात्मभावेनायमहमस्मीति विजानन्विद्वान्वाक्यार्थज्ञानमात्रेण न भवते न भवतीत्येतत् । किम् । अतिवाद्यतीत्य सर्वानन्यान्वदितुं शीलमस्येत्यतिवादी । यस्त्वेवंसाक्षादात्मानं प्राणस्य प्राणं विद्वान् सोऽतिवादी न भवतीत्यर्थः । सर्वं यदात्मैव नान्यदस्तीति दृष्टं तदा किं ह्यसावतीत्य वदेत् । यस्य त्वपरमन्यद्दृष्टमस्ति स तदतीत्य वदति । अयं तु विद्वानात्मनोऽन्यन्न पश्यति नान्यच्छृणोति नान्यद्विजानाति । अतो नातिवदति । किंचात्मक्रीड आत्मन्येव क्रीडा क्रीडनं यस्य नान्यत्र पुत्रदारा-

---

त्वात् । **निरतिशयमिति** । निर्गतः अतिशयो यस्मात्तत् । साम्यं सादृश्यं सर्वावयवावच्छेदेन न भवति । 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम्' इति सादृश्यलक्षणात् । चन्द्रस्य सादृश्यं मुखे प्रसन्नताधर्मेण न वर्तुलत्वादिरूपैः सर्वधर्मैः । तद्वदत्रापि स्यात्तेन च मुखचन्द्रयोरिव द्वैतापत्तिरिति शंकां निराकर्तुं निरतिशयमित्युक्तिः । सर्वांशेनात्र साम्यं न मुखचन्द्रादिवद्भूयोऽवयवैः । तच्च सर्वावयवसाम्यं एकस्मिन्नेव वस्तुनि संभवति तेनेदं सिद्धं यदत्र जीवपरमात्मनोरद्वैतं प्रतिपाद्यमिति तदाह—**अद्वयलक्षणमिति** । अर्वाञ्चि—निकृष्टानि ॥ ३ ॥

**सर्वभूतैरिति** । सर्वभूतैरुपलक्षित इत्यर्थः । **इत्थंभूतलक्षण इति** । 'इत्थंभूतलक्षणे च' पा. सू. (२।३।२१) इत्यनेन सर्वभूतैरिति तृतीया । यथा कस्यचित्पुरुषस्य शिरसि जटाभारं दृष्ट्वा तापसोऽयमिति प्रतीयते तत्र जटाभिस्तापस इति तृतीया प्रयुज्यते । ततश्च 'जटाभिस्तापसः' इत्यस्य जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थस्तथैव 'यः सर्वभूतैः' इति श्रुतिवाक्यस्य सर्वभूतज्ञाप्योत्पादकत्वविशिष्ट इत्यर्थः । ब्रह्मादिस्तम्बपर्यन्तानां कार्यरूपाणां ब्रह्मणोतिरिक्तं कारणं न संगच्छते तेन तत्कारणभूतो विवर्तरूपेण सर्वात्मेश्वरो विभातीत्यर्थः । **नातिवदतीति** । ब्रह्मणोऽतिरिक्तं घटपटादिरूपं शब्दजातं तात्पर्येण न वदती-

दिषु स आत्मक्रीडः । तथात्मरतिरात्मन्येव रती रमणं प्रीतिर्यस्य स आत्मरतिः । क्रीडा बाह्यसाधनसापेक्षा । रतिस्तु साधननिरपेक्षा बाह्यविषयप्रीतिमात्रमिति विशेषः । तथा क्रियावाञ्ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रियावान् । समासपाठ आत्मरतिरेव क्रियास्य विद्यत इति बहुव्रीहिमतुबर्थ-

---

त्यर्थः । क्रीडारत्योर्विषयविभागमाह-**बाह्यसाधनेत्यादि** । बाह्यं साधनं कन्दुकादि । **बाह्यविषयप्रीतिमात्रमिति** । केवलं विषयास्वादः । **समासपाठ इति** । अत्र पाठद्वयम् । १ आत्मरतिः क्रियावान् । २ आत्मरतिक्रियावान् । इति च । तत्र प्रथमः रतिक्रिययोरसमासादसमस्तः पाठः । द्वितीयः रतिक्रिययोः समासात्समस्तः पाठः । तत्र प्रथमपक्षे आत्मनि रतिर्यस्येति बहुव्रीहिः । प्रशस्ता क्रियास्येति मतुप्प्रत्ययश्च । द्वितीये समासपक्षे एवं विग्रहः स्यात् आत्मनि रतिः आत्मरतिरिति सप्तमी तत्पुरुषः । सैव क्रियाविद्यतेऽस्येति मतुप् । प्रथमेऽसमासपक्षे आत्मरतिरिति बहुव्रीहिः क्रियावानिति मतुप् च । ननु यदि द्वितीयपक्षे बहुव्रीहिर्मतुप् च नाश्रीयेते तर्हि कथमेतद्भाष्यम् । **बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यत इति** । अस्य झटिति भासमानोऽर्थः-बहुव्रीहिमतुबर्थयोर्मध्य एकोऽतिरिच्यतेऽधिको भवति व्यर्थ इति । परं नायमर्थो युक्तिसहः । यतो बहुव्रीहिमतुबर्थयोरेकत्र समायोगाभावः । तर्हि कोऽर्थो युक्तिसह इति चेत् शृणु । असमासपाठे बहुव्रीहिः कर्तव्यः ' आत्मरतिः ' इति पदे । ततः क्रियावान् इत्यत्र मतुप् । एवं च बहुव्रीहिविशिष्टो मतुप् प्रथमेऽसमासपक्षे । द्वितीये समासपक्षे 'आत्मरतिः' इति पदे सप्तमीतत्पुरुषः कर्तव्यः । ततः क्रियावानिति मतुप् । ततश्च द्वितीयपक्षे केवलो मतुप् । अयं च द्वितीयः बहुव्रीहिरहितः केवलो मतुप् श्रेष्ठः । अर्थसामञ्जस्यात् । तथाहि-आत्मरतिरेव केवलं क्रिया यस्य विद्यते ब्रह्मविदः । एवं चात्मरतिव्यतिरिक्ता बाह्या क्रिया तस्य निरस्यते तेनायं बहुव्रीहिरहितो मतुप्पक्षः साधीयान् । प्रथमेऽसमासपक्षे बहुव्रीहिणा ब्रह्मविद आत्मरतिर्द्योत्यते तथा च क्रियावानित्यनेन बाह्यक्रियापि प्रतिपाद्यते ततश्च बाह्यक्रियाविशिष्टत्वेन द्वैतप्रतीतेरद्वैतहानेः परमं साम्यमुपैतीति प्रकृतश्रुतिविरोधः स्यादतो द्वितीयः समासपक्षः साधीयानिति भाष्यकाराशयः । नन्वेवमाशये भाष्याक्षराणि कथं योजनीयानीति चेत्तदपि शृणु । बहुव्रीहिमतुबर्थयोः-प्रथमबहुव्रीहिसमासघटितमतुप्पक्षः बहुव्रीहिरहितमतुप्पक्षः इति द्वयोः पक्षयोर्मध्येऽन्यतरो द्वितीयः मतुप्पक्षः अर्थसामञ्जस्यात् अतिरिच्यते अधिको भवति साधीयान् भवतीत्यर्थः । यद्यप्येवमर्थकरणे लक्षणाश्रयणीया भवति तथापि तात्पर्यानुपपत्त्या लक्षणाश्रयणस्य प्रामाणिकत्वाद्गत्यन्तराभावाच्च तदाश्रयणम् ॥ अयमेकः प्रकारः पूर्वोक्तग्रन्थतात्पर्यप्रदर्शनस्य । अयं च प्रकारः आनन्दज्ञानसंमतः । अपरोपि प्रकारः केषांचिन्मते । तथाहि-बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यते ' इत्यत्र संभाव्यमानयोरिति शेषः कर्तव्यः । तथा च समासपाठे यदि द्वयं क्रियेत बहुव्रीहिर्मतुप् च तर्हि तत्रोभयोर्मध्ये चैकोऽधिको भवेत् ।

योरन्यतरोऽतिरिच्यते। केचित्त्वग्निहोत्रादिकर्मब्रह्मविद्ययोः समुच्चयार्थमिच्छन्ति। तच्चैष ब्रह्मविदां वरिष्ठ इत्यनेन मुख्यार्थवचनेन विरुध्यते। न हि बाह्यक्रीड आत्मरतिश्च भवितुं शक्तः। कश्चित्कचिद्बाह्यक्रियाविनिवृत्तो ह्यात्मक्रीडो भवति बाह्यक्रियात्मक्रीडयोर्विरोधात्। न हि तमःप्रकाशयोर्युगपदेकत्र स्थितिः संभवति। तस्मादसत्प्रलपितमेवैतदनेन ज्ञानकर्मसमुच्चयप्रतिपादनम्। "अन्या वाचो विमुञ्चथ"(मुं.२।२।५)"संन्यासयोगात्" (मुं.३।२।६)इत्यादिश्रुतिभ्यश्च। तस्मादयमेवेह क्रियावान्यो ज्ञानध्यानादिक्रियावानसंभिन्नार्थमर्यादः संन्यासी य एवंलक्षणो नातिवाद्यात्मक्रीड आत्मरतिः क्रियावान्ब्रह्मनिष्ठः स ब्रह्मविदां सर्वेषां वरिष्ठः प्रधानः ॥ ४ ॥

अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि।

**सत्येन लभ्यस्तपसा ह्येष आत्मा**
**सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्।**
**अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो**
**यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥**

---

अत्र तु केवलं मतुप् कृतस्तेन न बहुव्रीहेर्वैयर्थ्यमित्यर्थः। अत्र पक्षे यद्यपि लक्षणाश्रयणं नास्ति तथापि संभाव्यमानयोरित्यस्य शेषः कर्तव्य इति शब्दाध्याहाररूपो दोषः। एवं चोभयोरपि पक्षयोः शब्ददोषघटितत्वादर्थसामञ्जस्यात्पूर्वः प्रकार आश्रयणीय इति भाति। अन्यच्च समासपाठे कर्मधारयान्मतुप् कर्तव्यः स च कर्मधारयान्मतुब्नेष्टः इति पातञ्जलमहाभाष्यानभिमतः। एवं च वैयाकरणानभिमतत्वेनात्र पाठे भाष्यकारैः श्रीशंकराचार्यैररुचिः प्रदर्शिता—समासपाठे तु—इति तुशब्देन। यतोऽत्र आत्मरतिरेव क्रिया आत्मरतिक्रिया इति कर्मधारयसमासं कृत्वा ततो मतुप् कर्तव्यो भवति। स च पूर्वोक्तरीत्या न संगच्छत इति। **केचित्त्विति**। वृत्तिकृतो बौधायनादयो ज्ञानकर्मसमुच्चयवादिनः। तन्मते—आत्मरतीत्यादौ असमस्ते समस्ते च पाठे आत्मरतिपदेन ज्ञानं प्रतिपाद्यते क्रियावत्पदेन अग्निहोत्रादि कर्म प्रतिपाद्यत इति। **मुख्यार्थवचनेनेति**। ब्रह्मविदां वरिष्ठ इति मुख्यार्थकं (ब्रह्मविद्वरिष्ठ इति पदं) न लाक्षणिकं सगुणोपासकादिपरमित्यर्थः। **शक्त इति**। एककालं बाह्यात्मक्रीडयोरसंभवात्। तदाह—**कश्चिदित्यादि**। **असत्प्रलपितमिति**। श्रुतिविरुद्धं ज्ञानकर्मसमुच्चयरूपम्। **तस्मादिति**। क्रियाशब्देन बाह्यक्रियाग्रहणासंभवात् ध्यानादय आन्तराः क्रिया ग्राह्याः। **असंभिन्नार्थमर्याद इति**। बाह्यक्रियावलम्बेन ब्रह्मज्ञानरूपार्थमर्यादा न विहतानेनेति बोध्यम् ॥ ४ ॥

सत्येनानृतत्यागेन मृषावदनत्यागेन लभ्यः प्राप्तव्यः। किंच तपसा हीन्द्रियमनएकाग्रतया "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इति स्मरणात्। तद्ध्यनुकूलमात्मदर्शनाभिमुखीभावात्परमं साधनं तपो नेतरच्चान्द्रायणादि। एष आत्मा लभ्य इत्यनुषङ्गः सर्वत्र। सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्येण मैथुनासमाचारेण नित्यं सर्वदा नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपिकान्यायेनानुषक्तव्यः। वक्ष्यति च– "न येषु जिह्ममनृतं न माया च"(प्र.१।१६) इति कासावात्मा य एतैः साधनैर्लभ्य इत्युच्यते अन्तःशरीरेऽन्तर्मध्ये शरीरस्य पुण्डरीकाकाशे ज्योतिर्मयो हि रुक्मवर्णः शुभ्रः शुद्धो यमात्मानं पश्यन्त्युपलभन्ते यतयो

---

**भिक्षोरिति**। संन्यासिन इत्यर्थः। **सम्यग्ज्ञानसहकारीणीति**। अत्र सम्यग्ज्ञानशब्देन वाक्यार्थज्ञानं ग्राह्यं यस्माज्ज्ञानात् क्रमशः ब्रह्मानुभवात्मकं फलमन्ते संपद्येत। यतो वाक्यार्थज्ञानस्यैव सत्यादीनां सहकारिसाधनानामपेक्षा। ब्रह्मानुभवे संपन्ने तु नापेक्षा सत्यादीनामतः पूर्वोक्तं वाक्यार्थज्ञानं ग्राह्यम्। एवं चानुभवात्मकस्य परिपक्वज्ञानस्य लाभाय सत्यादीनि साधनान्यपेक्ष्यन्ते। ततो वाक्यार्थज्ञानस्य सत्यादीनां च समुच्चय इष्यत एव। परिपक्वज्ञाने सहकार्यपेक्षायां प्रमाणं नास्ति। यतः परिपक्वज्ञानानन्तरं कर्मणामसंश्लेषः श्रुतावाम्नातः। देवादीनां कर्मरहितानामपि मुक्तिः श्रूयते च। **निवृत्तिप्रधानानीति**। सत्यतपोब्रह्मचर्येषु निवृत्तिरेव प्राधान्येन प्रोच्यते। **चान्द्रायणादीति**। आदिपदेन सांतपनकृच्छ्रपराकयोर्ग्रहणम्। तल्लक्षणानि यथा–चान्द्रायणं वसिष्ठस्मृतौ–एकैकं वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत्। इन्दुक्षये न भुञ्जीत ह्येष चान्द्रायणो विधिः॥ इति। सांतपनकृच्छ्रम्–गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन्॥ इति। पराकं च मनुस्मृतौ–यदात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्। पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः॥ बृहस्पतिस्मृतौ–जपहोमरतः कुर्याद् द्वादशाहमभोजनम्। पराक एष विख्यातः सर्वपापप्रणाशनः॥ अनुषंगः–संबन्धः। **मैथुनासमाचारेणेति**। मैथुनाकरणेनेत्यर्थः। **अन्तर्दीपिकान्यायेनेति**। यथा गृहमध्ये स्थापित एक एव दीपो गृहस्थान् सर्वान् घटापटादिपदार्थान् प्रकाशयति तथा श्लोकमध्ये पठितो 'नित्यम्' इति शब्दस्तच्छ्लोकस्थान्सत्यादिशब्दान् विशेषयति। अनुषक्तव्यः–संबन्धनीयः। **वक्ष्यतीति**। न येषु जिह्ममनृतं न माया, इति वाक्यमत्रैवोपनिषदि न विद्यते किंतु प्रश्नोपनिषदि। तेन श्रीशंकराचार्याणां मतेऽस्या मुण्डकोपनिषदः प्रश्नोपनिषदश्च संबन्धो वर्तते तत एव वक्ष्यतीत्युक्तिः। एतद्विषयको विस्तर उपोद्घाते द्रष्टव्यः। **यतय इति**। 'यती प्रयत्ने' इत्यस्य

यतनशीलाः संन्यासिनः क्षीणदोषाः क्षीणक्रोधादिचित्तमलाः स आत्मा नित्यं सत्यादिसाधनैः संन्यासिभिर्लभ्यत इत्यर्थः । न कादाचित्कैः सत्यादिभिर्लभ्यते ॥ ५ ॥

सत्यादिसाधनस्तुत्यर्थोऽयमर्थवादः—

सत्यमेव जयति नानृतं
सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा
यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

सत्यमेव सत्यवानेव जयति नानृतं नानृतवादीत्यर्थः । न हि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोर्जयः पराजयो वा संभवति । प्रसिद्धं लोके सत्यवादिनानृतवाद्यभिभूयते न विपर्ययोऽतः सिद्धं सत्यस्य बलवत्साधनत्वम् । किंच शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वम् । कथम् । सत्येन यथाभूतवादव्यवस्थया पन्था देवयानाख्यो विततो विस्तीर्णः सातत्येन प्रवृत्तः । येन पथा ह्याक्रमन्त्याक्रमन्त ऋषयो दर्शनवन्तः कुहकमायाशाठ्याहंकारदम्भानृतवर्जिता ह्याप्तकामा विगततृष्णाः सर्वतो यत्र यस्मिंस्तत्परमार्थतत्त्वं सत्यस्योत्तमसाधनस्य संबन्धि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण

---

रूपं तत उक्तं—**यतनशीला इति** । **कादाचित्कैरिति** । जन्मपर्यन्तमसत्यभाषी कदाचित्प्रसंगविशेषे सत्यं ब्रूयाच्चेत्तन्न फलायेत्यर्थः ॥ ५ ॥

**अर्थवाद इति** । सत्यभाषणे प्रवर्तकं स्तुतिवाक्यमित्यर्थः । केवलसत्यानृतयोरचेतनयोर्जयपराजयौ न संभवत इत्यत आह—**सत्यवानित्यादि** । सत्यपदं सत्यवादिनो लक्षकम् । तथानृतपदमनृतवादिनो लक्षकम् । मुख्यार्थबाधे लक्षणायाः संभवात् मुख्यार्थबाधं विशदयति—**नहीति** । **पुरुषानाश्रितयोरिति** । सत्यमनृतं च गुणौ । गुणानां च गुण्याश्रयेणैव कार्यसंपादकत्वं न तु स्वतः । ततश्च पुरुषमाश्रित्य सत्यानृतयोर्जयपराजयौ । **न विपर्यय इति** । अनृतवादिना सत्यवादी पराजीयत इति न शिष्टजनेषु संभावनेत्यर्थः । **देवयानाख्य इति** । देवा यान्त्यनेनेति देवयानः । देवपदेन शिष्टानां ग्रहणम् । देवयानः—शिष्टजनादृतः । दर्शनवन्तः—ज्ञानिनः । कुहकं—परवञ्चनम् । माया—अन्तरन्यथागृहीत्वा बहिरन्यथा प्रकाशनम् । मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद् दुरात्मनामित्युक्तेः । शाठ्यं—विभवानुसारेणाप्रदानम् । अहंकारः—मिथ्याभिमानः । दम्भः—धर्मध्वजित्वम् । अनृतं—दृष्टविरुद्धं भाषणम् । विगततृष्णाः—लोभरहिताः । **साध्यमिति** । सत्यमुत्तमसाधनं साध्यं

निधीयत इति निधानं वर्तते । तत्र च येन पथाक्रमन्ति स सत्येन वितत इति पूर्वेण संबन्धः ॥ ६ ॥

किं तत्किंधर्मकं च तदित्युच्यते—

**बृहच्च तद्दिव्यमचिन्त्यरूपं**
**सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।**
**दूरात्सुदूरे तदिहान्तिके च**
**पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥**

बृहन्महच्च तत्प्रकृतं ब्रह्म सत्यादिसाधनेन सर्वतो व्याप्तत्वात् । दिव्यं स्वयंप्रभमनिन्द्रियगोचरमत एव न चिन्तयितुं शक्यतेऽस्य रूपमित्यचिन्त्यरूपम् । सूक्ष्मादाकाशादेरपि तत्सूक्ष्मतरं, निरतिशयं हि सौक्ष्म्यमस्य सर्वकारणत्वाद्विभाति विविधमादित्यचन्द्राद्याकारेण भाति दीप्यते । किंच दूराद्विप्रकृष्टदेशात्सुदूरे विप्रकृष्टतरे देशे वर्ततेऽविदुषामत्यन्तागम्यत्वात्तद्ब्रह्म । इह देहेऽन्तिके समीपे च विदुषामात्मत्वात् । सर्वांतरत्वाच्चाकाशस्याप्यन्तरश्रुतेः । इह पश्यत्सु चेतनावत्स्वित्येतत् । निहितं स्थितं दर्शनादिक्रियावत्त्वेन योगिभिर्लक्ष्यमाणम् । क्व गुहायां बुद्धिलक्षणायाम् । तत्र हि निगूढं लक्ष्यते विद्वद्भिः । तथाप्यविद्यया संवृतं सन्न लक्षते तत्रस्थमेवाविद्वद्भिः ॥७॥

---

च पुरुषार्थ इत्यर्थः । **वितत इति** । अस्मिन्मन्त्रे भाष्योक्तरीत्या उत्तरार्धगतानां पदानां पूर्वार्धगतेन वितत इत्यनेन संबन्धः कर्तव्यः ॥ ६ ॥

पूर्वमन्त्रेण यदुक्तं सत्यस्य निधानं तद्विशेष्यते–**बृहदित्यादिना** । **सत्यादिसाधनेनेति** । सत्यतपोब्रह्मचर्यादिभिः सर्वत्र व्याप्तत्वात्तत्पूर्वमन्त्रोक्तं ब्रह्म महदित्यर्थः । **अनिन्द्रियगोचरमिति** । यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुत्या वागादीन्द्रियैरदृश्यं तेन तद्रूपं चिन्तयितुं न शक्यमित्यर्थः । **सर्वकारणत्वादिति** । कारणं कार्यापेक्षया न्यूनमिति नियमः । इदं तु सर्वेषां कारणं ततः सर्वापेक्षया न्यूनत्वेनात्यन्तं सौक्ष्म्यमस्य ब्रह्मणः । अणोरणीयान्महतो महीयानिति श्रुतेः । **आदित्यचन्द्रादीत्यादि** । चन्द्रादीत्यत्रादिपदेनाग्निविद्युतां ग्रहणम् । **अविदुषामिति** । अज्ञानिभिरत्यन्तमज्ञेयं ब्रह्म । तस्य ज्ञानैकलभ्यत्वात् । 'ब्रह्मविदाप्नोति परम्' इति श्रुतेः । **देह इति** । बुद्धिगुहायामित्यर्थः । **आत्मत्वादिति** । ज्ञानी त्वात्मैव मे मतमिति भगवदुक्त्या ब्रह्मण आत्मा ज्ञानी तेनैव न्यायेन ब्रह्मापि ज्ञानिन आत्मभूतम् । संवृतं–आच्छन्नम् । **न लक्ष्यत इति** । यथा कण्ठस्थचामीकरमणिर्बालादिभिः कण्ठगतोऽपि विस्मरणान्न ज्ञायते तद्वदित्यर्थः ॥ ७ ॥

पुनरप्यसाधारणं तदुपलब्धिसाधनमुच्यते ।

न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु
तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥

यस्मान्न चक्षुषा गृह्यते केनचिदप्यरूपत्वान्नापि गृह्यते वाचानभिधेयत्वान्न चान्यैर्देवैरितरेन्द्रियैः । तपसः सर्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते । तथा वैदिकेनाग्निहोत्रादिकर्मणा प्रसिद्धमहत्त्वेनापि न गृह्यते । किं पुनस्तस्य ग्रहणे साधनमित्याह—ज्ञानप्रसादेनात्मावबोधनसमर्थमपि स्वभावेन सर्वप्राणिनां ज्ञानं बाह्यविषयरागादिदोषकलुषितमप्रसन्नमशुद्धं सन्नावबोधयति नित्यं संनिहितमप्यात्मतत्त्वं मलावनद्ध इवादर्शः विलुलितमिव सलिलम् । यदेन्द्रियविषयसंसर्गजनितरागादिमलकालुष्यापनयनादादर्शसलिलादिवत्प्रसादितं स्वच्छं शान्तमवतिष्ठते, तदा ज्ञानस्य प्रसादः स्यात् । तेन ज्ञान-

---

**असाधारणमिति** । मुख्यमित्यर्थः । ब्रह्मप्राप्तौ ज्ञानमेव मुख्यं साधनं तदनेन मन्त्रेण बोध्यते । **अरूपत्वादिति** । रूपग्रहण एव चक्षुषः सामर्थ्यं ब्रह्म तु रूपरहितं ततो न चक्षुषा ग्राह्यम् । अनभिधेयत्वात्-अवाच्यत्वात् । देवशब्द इन्द्रियवाचकस्तदाह-**इतरेन्द्रियैरिति** । **सर्वप्राप्तिसाधनत्व इति** । यद् दुष्करं दुराराध्यं यद् दुरापं यच्च दुस्तरम् । तत्सर्वं तपसा लभ्यं तपो हि दुरतिक्रमम् ॥ इत्युक्तेः । **प्रसिद्धमहत्त्वेनेति** । श्रुतौ कर्मणो महत्त्वं बहुशः प्रसिद्धमित्यर्थः । **स्वभावेनेति** । अनन्तजन्मगतकर्मवशादित्यर्थः । **ज्ञानप्रसादेनेति** । ज्ञायतेऽर्थोऽनेनेति व्युत्पत्त्या ज्ञानपदेन बुद्धिरभिधीयते । तथा च ज्ञानप्रसादेनेत्यस्यार्थः, बुद्धेः प्रसन्नतयेति संपन्नः । ज्ञानं–बुद्धिः । **बाह्यविषयेत्यादि** । बाह्याः स्रक्चन्दनादयो विषयास्तत्र रागः-प्रेम । आदिपदेन द्वेषः । एवं च रागद्वेषादिदोषैः कलुषितमशुद्धतामापादितम् । अतएवाप्रसन्नं सन्न बोधयति संनिहितमध्यात्मतत्त्वम् । अत्र दृष्टान्तद्वयम् । मलावनद्ध आदर्शः । विलुलितं जलं च । अयमर्थः-यथा मलाभिभूत आदर्शो हस्ताभ्यां चञ्चलतामापादितं जलं च समीपस्थमपि मुखं न प्रत्याययति तद्वद्बाह्यविषयरागद्वेषाक्रान्तबुद्धिः समीपस्थं स्वगतमपि ब्रह्मतत्त्वं नावबोधयति । पश्चात् विषयेन्द्रियसंपर्कजन्यरागादिदोषापनयने स्वच्छा सती सैव बुद्धिः शुद्धादर्श इव स्थिरजलमिव चात्मतत्त्वं प्रकाशयति । एवंचायं क्रमः-प्रथमं सत्यादिसाधनवता विषयानाकृष्टचेतसा पुरुषेण पूर्वं ध्यानं संपादनीयम् । ततो ध्यानेन बुद्धिप्रसादः प्रापणीयः । बुद्धिप्रसादेनात्मा द्रष्टव्यः । एवं चास्मिन्मन्त्रे द्वितीयार्धेऽयमन्वयः । ध्यायमानो ज्ञानप्रसादेन विशुद्धसत्त्वः । ततस्तु तं निष्कलं

प्रसादेन विशुद्धसत्त्वो विशुद्धान्तःकरणो योग्यो ब्रह्म द्रष्टुं यस्मात्, ततस्तस्मात्तु तमात्मानं पश्यते पश्यत्युपलभते निष्कलं सर्वावयवभेदवर्जितं ध्यायमानः सत्यादिसाधनवानुपसंहृतकरण एकाग्रेण मनसा ध्यायमानश्चिन्तयन् ॥ ८॥

यमात्मानमेवं पश्यति—

एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन्प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां
यस्मिन्विशुद्धे विभवत्येष आत्मा ॥ ९ ॥

एषोऽणुः सूक्ष्म आत्मा चेतसा विशुद्धज्ञानेन केवलेन वेदितव्यः । क्वासौ । यस्मिञ्शरीरे प्राणो वायुः पञ्चधा प्राणापानादिभेदेन संविवेश सम्यक्प्रविष्टस्तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः । कीदृशेन चेतसा वेदितव्य इत्याह—प्राणैः सहेन्द्रियैश्चित्तं सर्वमन्तःकरणं प्रजानामोतं व्याप्तं येन क्षीरमिव स्नेहेन, काष्ठमिवाग्निना । सर्वं हि प्रजानामन्तःकरणं चेतनावत्प्रसिद्धं लोके । यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवत्येष उक्त आत्मा विशेषेण स्वेनात्मना विभवत्यात्मानं प्रकाशयतीत्यर्थः ॥ ९ ॥

---

पश्यते । इति । तेनेदं सिद्धम् । ध्यानं न तत्त्वसाक्षात्कारे कारणं किंतु बुद्धिप्रसादे । तत्त्वसाक्षात्कारे तु संशयादिरहितं प्रमाणज्ञानमेव कारणम् । ज्ञानस्य प्रसादः—बुद्धेः प्रसन्नता । **यस्मादिति** । यस्माद् विशुद्धान्तःकरणो ब्रह्म द्रष्टुं योग्यस्तस्मात् तमात्मानं पश्यत इत्यादिसंबन्धः । **निष्कलमिति** । क्रियाविशेषणमेतद् ध्यायमान इत्यनेन संबध्यते । अवयवभेदरहितं यथा स्यात्तथा ध्यायमान इत्यर्थः । **उपसंहृतकरण इति** । विषयेभ्य उपसंहृतानि समावर्जितानि करणानि इन्द्रियाणि यस्य । विषयविनिवृत्तेन्द्रिय इत्यर्थः । **एकाग्रेणेति** । निश्चलेनेत्यर्थः । यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृतेति भगवदुक्तेः ॥ ८ ॥

**चेतसेति** । चेतःपदं वृत्तिवृत्तिमतोरभेदाज्ज्ञानवृत्त्युपलक्षकं तदाह—**विशुद्धज्ञानेनेति** । **प्राणापानादीति** । प्राणापानव्यानोदानसमानेति पञ्च वायवः । प्रजानामन्तःकरणं येनात्मना व्याप्तम् । अत्र दृष्टान्तद्वयम् । स्नेहेन क्षीरम् । अग्निना काष्ठम् । स्नेहो यथा प्रतिक्षीरपरमाणु वर्तते शमीकाष्ठेऽग्निश्च सर्वावयवेषु वर्तते तद्वत् । यद्यपि सर्वव्याप्यात्मा तथापि यावच्चित्तमलो नापयाति तावत्पर्यन्तं न प्रकाशत इत्याह—**शुद्ध इति** ॥ ९ ॥

य एवमुक्तलक्षणं सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमाह ।

यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामां—
स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषदि तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥

यं यं लोकं पित्रादिलक्षणं मनसा संविभाति संकल्पयति मह्यमन्यस्मै वा भवेदिति विशुद्धसत्त्वः क्षीणक्लेश आत्मविन्निर्मलान्तःकरणः कामयते यांश्च कामान्प्रार्थयते भोगांस्तं तं लोकं जयते प्राप्नोति तांश्च कामान्संकल्पितान्भोगान् । तस्माद्विदुषः सत्यसंकल्पत्वादात्मज्ञमात्मज्ञानेन विशुद्धान्तःकरणं ह्यर्चयेत्पूजयेत्पादप्रक्षालनशुश्रूषानमस्कारादिभिर्भूतिकामो विभूतिमिच्छुः । ततः पूजार्ह एवासौ ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥

स वेदैतत्परमं ब्रह्म धाम
यत्र विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामा—
स्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

---

यमिति मन्त्रेण ब्रह्मविदः सगुणोपासनाफलमपि लभ्यत इत्याह निर्गुणविद्यास्तुतये प्ररोचनार्थम् । अथवा निर्गुणविद्याफले सर्वात्मत्वप्राप्तौ लब्धायां सगुणविद्याफलं तत्रान्तर्गतमेव । यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः । इति भगवदुक्तरीत्या । **पित्रादिलक्षणमिति** । 'कर्मणा पितृलोकः' इति श्रुत्या कर्मफलं पितृलोकादिलक्षणम् । **प्राप्नोतीति** । सत्यसंकल्पत्वादित्यर्थः । **पूजयेदिति** । ततो लोकसंग्रहार्थं पूजया संतुष्टः स पूजकेच्छानुरोधेन तदर्थं तं तं लोकं संकल्पयेत् । **पूजार्ह इति** । पूजकेन स्वेष्टसिद्धय एव तत्पूजा कर्तव्या नतु पूजया ब्रह्मविदि वैशिष्ट्यं संभवेदिति भावः ॥ १० ॥

इति श्रीमुण्डकोपनिषद्भाष्ये बालबोधिन्यां तृतीयमुण्डके प्रथमः खण्डः ॥ ३ ॥ १ ॥

यस्मात्स वेद जानाति एतद्यथोक्तलक्षणं ब्रह्म परममुत्कृष्टं धाम सर्वकामानामाश्रयमास्पदं यत्र यस्मिन्ब्रह्मणि धाम्नि विश्वं समस्तं जगन्निहितमर्पितं, यच्च स्वेन ज्योतिषा भाति शुभ्रं शुद्धम्। तमप्येवंविधमात्मज्ञं पुरुषं ये ह्यकामा विभूतितृष्णावर्जिता मुमुक्षवः सन्त उपासते परमिव देवं, ते शुक्रं नृबीजं यदेतत्प्रसिद्धं शरीरोपादानकारणमतिवर्तन्त्यतिगच्छन्ति धीरा धीमन्तो न पुनर्योनिं प्रसर्पन्ति "न पुनः क्व रतिं करोति" इति श्रुतेः। अतस्तं पूजयेदित्यभिप्रायः ॥ १ ॥

मुमुक्षोः कामत्याग एव प्रधानं साधनमित्येतद्दर्शयति।

**कामान्यः कामयते मन्यमानः**
**स कामभिर्जायते तत्र तत्र।**
**पर्याप्तकामस्य कृतात्मन-**
**स्त्विहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥**

कामान्यो दृष्टादृष्टेष्टविषयान्कामयते मन्यमानस्तद्गुणांश्चिन्तयानः प्रार्थयते, स तैः कामभिः कामैर्धर्माधर्मप्रवृत्तिहेतुभिर्विषयेच्छारूपैः सह जायते तत्र तत्र, यत्र यत्र विषयप्राप्तिनिमित्तं कामाः कर्मसु पुरुषं नियोजयन्ति, तत्र तत्र तेषु तेषु विषयेषु तैरेव कामैर्वेष्टितो जायते। यस्तु परमार्थतत्त्वविज्ञानात्पर्याप्तकाम आत्मकामत्वेन परि समन्तत आप्ताः कामा यस्य, तस्य पर्याप्तकामस्य कृतात्मनोऽविद्यालक्षणादपररूपादपनीय स्वेन परेण रूपेण

ब्रह्मविद एव प्रकरणम्। **यथोक्तलक्षणमिति**। 'बृहच्च तद् दिव्यमचिन्त्यरूपम्' (मुं० ३।१।७) इत्यादिनोक्तम्। **विभूतितृष्णावर्जिता इति**। ऐश्वर्यलालसारहिताः संन्यासिन इत्यर्थः। नृबीजं–रेतः। **शरीरोपादनकारणमिति**। अन्नाद्रेतः। रेतसः पुरुषः। इति श्रुतेः। **प्रसर्पन्तीति**। पुनर्जन्म न लभन्त इत्यर्थः। **रतिमिति**। कस्मिन्नपि जन्मनि स्नेहं न कुर्वन्तीत्यर्थः ॥ १ ॥

**दृष्टादृष्टेष्टविषयानिति**। दृष्टा ऐहिकाः स्रक्चन्दनवनितादयः अदृष्टाः स्वर्गामृतादयः। तद्रूपा य इष्टविषयाः। **कामभिरिति**। आर्षमिदं रूपम्। **परमार्थतत्त्वज्ञानादिति**। परमार्थतत्त्वज्ञाने विषयवैराग्यं भवति। तच्च विषयेषु दोषदर्शनात्संभवति। **पर्याप्तकाम इति**। यश्चात्मकामः स आत्मबुभुत्सयैव वशीकृतचित्तो भवति तेन तस्य कामा विषयेभ्यो निवृत्ता एव भवन्ति। यदि विषयेषु तस्याल्पोऽपि कामः स्यात् तर्हि आत्मकामत्वं न संभवेत् अर्थाद् विषयनिवृत्तिस्तस्य स्यात। ततः स्वकारणविनाशात्पुन.

कृत आत्मा विद्यया यस्य तस्य कृतात्मनस्त्विहैव तिष्ठत्येव शरीरे सर्वे धर्माधर्मप्रवृत्तिहेतवः प्रविलीयन्ति प्रविलीयन्ते विलयमुपयान्ति नश्यन्तीत्यर्थः। कामास्तज्जन्महेतुविनाशान्न जायन्त इत्यभिप्रायः॥ २॥

यद्येवं सर्वलाभात्परम आत्मलाभस्तल्लाभाय प्रवचनादय उपाया बाहुल्येन कर्तव्या इति प्राप्त इदमुच्यते।

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्य—**
**स्तस्यैष आत्मा विवृणुते तनूं स्वाम्॥ ३॥**

योऽयमात्मा व्याख्यातो यस्य लाभः परः पुरुषार्थो नासौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः। तथा न मेधया ग्रन्थार्थधारणशक्त्या। न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थः। केन तर्हि लभ्य

---

कामा न जायन्ते। **तिष्ठत्येवेति**। वर्तमान एव शरीर इत्यर्थः। अत्र 'इहैव' इति पदेन जीवन्मुक्तिर्बोध्यते। **धर्माधर्मप्रवृत्तिहेतव इति**। कामा एव धर्माधर्मप्रवृत्तौ कारणम् तन्नाशाद् धर्माधर्मप्रवृत्त्यभावः। कारणरूपं यदज्ञानं तस्य ज्ञानेन नाशात् कामानामप्युत्पत्तिर्न भवति। अयमर्थः। अज्ञाननाशे कामानुत्पत्तिः। कामाभावे धर्माधर्मप्रवृत्तिराहित्यम्। धर्माधर्माभावे पुनर्जन्माभाव इति॥ २॥

**वेदशास्त्रेत्यादि**। ऋग्वेदादिवेदानां पूर्वमीमांसादिशास्त्राणामध्ययनं विपुलतया यत्र वर्तत एतादृशेन प्रवचनेन। **ग्रन्थार्थधारणशक्त्येति**। ग्रन्थार्थस्य चिरकालं धारणमविस्मरणं तादृशशक्त्येत्यर्थः। 'धीर्धारणावती मेधा' इत्यमरः। **न बहुना श्रुतेनेति**। अत्र उपनिषद्विचारं विरहय्येत्यर्थो बोध्यः। उपनिषद्विचारस्तु आत्मप्राप्तावावश्यकः। **तेन वरणेनेति**। अत्र 'यत्तदोर्नित्यसंबन्धः' इत्यभियुक्तोक्त्या यत्पदेन यस्य ग्रहणं तस्यैव तत्पदेन परामर्शः करणीयस्तथा च-एष आत्मा यमेवोपासकं वृणुते तेनोपासकेनात्मा लभ्यः इत्यर्थो युक्तिसहः। तं परित्यज्य तेनेत्यस्य वरणेनेत्यर्थो भाष्ये कथं गृह्यत इति चेन्न प्रकरणानुरोधेनास्यार्थस्य ततोऽपि युक्तिसहत्वात्। तथाहि-अत्र मन्त्र आत्मा प्रवचनादिना साधनेन न लभ्यते तर्हि केन साधनेन लभ्यत इति शंकां निराकर्तुं तेनेति पदं प्रयुक्तम्। एवंच साधनप्रकरणात्तेनेति साधनद्योतिका तृतीया। पूर्वोक्तप्रकारेण तेनेत्यस्योपासकेनेत्यर्थे कृते प्रकरणविरोधः स्यात्। अतो यत्तदोः संबन्धं परिहायापि प्रकरणानुरोधेनार्थोऽङ्गीक्रियते। अहं परमात्मास्मीत्यभेदानुसंधानं वरणम्। तेन वरणेनैष आत्मा लभ्यते। बहिर्मुखेन तु शतशोऽपि श्रवणादौ क्रियमाणे न लभ्यते। अतोऽहं परमात्मास्मीत्यभेदानुसंधानं

इत्युच्यते । यमेव परमात्मानमेवैष विद्वान्वृणुते प्राप्तुमिच्छति, तेन वरणेनैष पर आत्मा लभ्यो नान्येन साधनान्तरेण । नित्यलब्धस्वभावत्त्वात् । कीदृशोऽसौ विदुष आत्मलाभ इति उच्यते—तस्यैष आत्माऽविद्यासंछन्नां स्वां परां तनूं स्वात्मतत्त्वं स्वरूपं विवृणुते प्रकाशयति, प्रकाश इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थः । तस्मादन्यत्यागेनाप्रार्थनैवात्मलाभसाधनमित्यर्थः ॥ ३ ॥

आत्मप्रार्थनासहायभूतान्येतानि च साधनानि बलाप्रमादतपांसि लिङ्गयुक्तानि संन्याससहितानि ।

**नायमात्मा बलहीनेन लभ्यो**
**न च प्रमादात्तपसो वाऽप्यलिङ्गात् ।**
**एतैरुपायैर्यतते यस्तु विद्वां—**
**स्तस्यैष आत्मा विशते ब्रह्म धाम ॥ ४ ॥**

यस्मात्, नायमात्मा बलहीनेन बलप्रहीणेनात्मनिष्ठाजनितवीर्यहीनेन लभ्यः । नापि लौकिकपुत्रपश्वादिविषयसङ्गनिमित्तप्रमादात् । तथा

---

पुरस्कृत्यैव श्रवणादि संपादनीयमिति भावः । यत्तदोः संबन्धं कृत्वा वक्ष्यमाणं व्याख्यानम् । तथाहि यमिति यत्पदेन परमात्मा ग्राह्यः । अथवा यमेव परमात्मानं वृणुते तेन परमात्मना मुमुक्षुभूतेन लभ्यः । तत्र साधनं श्रवणं—अभेदानुसंधानरूपं प्रार्थनम् । परमात्मैवाहं मुमुक्षुरूपेण व्यवस्थित इत्यभेदानुसंधानेनैव स आत्मा लभ्यो न कर्मणेत्यर्थः । अत्र द्वितीयपक्षे यत्तदोः संबन्धो घटते तथापि श्रवणेनेत्यस्याध्याहारः कर्तव्यः । एवं चाध्याहारकरणरूपो दोषः । तेन पूर्वोक्तमेव व्याख्यानं वरम् । **नित्यलब्धेत्यादि** । आत्मप्राप्तिविषयकं वरणं, आत्मप्राप्तीच्छैवोत्पद्यतां तत एवात्मप्राप्तिर्नान्यत्तत्र साधनं यतः स नित्यमेव प्राप्तः । **अविद्यासंच्छन्नामिति** । अविद्ययैवाच्छन्ना परमात्मतनूः । परां—उत्कृष्टाम् । **प्रकाश इवेति** । यथा तमसा संच्छन्नो घटः प्रकाशे सति स्वरूपेण प्रतीयते तथा ज्ञानेनाज्ञाननाश आत्मा स्वरूपेणाविर्भवति । अविद्यानाशकज्ञानप्राप्तौ च वरणमेव केवलं साधनं नान्यदित्यर्थः ॥ ३ ॥

आत्मप्रार्थनायां सहायभूतानि साधनानि बलं, अप्रमादः, तपः इति त्रीणि संन्याससहितानि । **बलप्रहीणेनेति** । अत्र बलपदेनात्मनिष्ठाजनितं वीर्यं ग्राह्यम् । तादृशवीर्यप्राप्तौ मिथ्याज्ञानेनाभिभवो न भवति । यथा व्यायामादिना शारीरबलप्राप्तौ शीतज्वरादिरोगाभिभवो न भवति । **लौकिकेत्यादि** । लौकिका ये पुत्रपश्वादिविषयास्तत्र संग आस-

तपसो वाप्यलिङ्गाल्लिङ्गरहितात् । तपोऽत्र ज्ञानम् । लिङ्गं सन्यासः । संन्यासरहिताज्ज्ञानान्न लभ्यत इत्यर्थः । एतैरुपायैर्बलाप्रमादसंन्यासज्ञानैर्यतते तत्परः सन्प्रयतते यस्तु विद्वान्विवेक्यात्मवित्, तस्य विदुष एष आत्मा विशते संप्रविशति ब्रह्म धाम ॥ ४ ॥

कथं ब्रह्म संविशत इत्युच्यते ।

संप्राप्यैनमृषयो ज्ञानतृप्ताः
कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा
युक्तात्मानः सर्वमेवाविशन्ति ॥ ५ ॥

संप्राप्य समवगम्यैनमात्मानमृषयो दर्शनवन्तस्तेनैव ज्ञानेन तृप्ता न बाह्येन तृप्तिसाधनेन शरीरोपचयकारणेन । कृतात्मानः परमात्मस्वरूपेणैव निष्पन्नात्मानः सन्तः । वीतरागा विगतरागादिदोषाः । प्रशान्ता उपरतेन्द्रियाः। त एवंभूताः सर्वगं सर्वव्यापिनमाकाशवत्सर्वतः सर्वत्र प्राप्य, नोपाधिपरिच्छिन्नेनैकदेशेन । किं तर्हि, तद्ब्रह्मैवाद्वयमात्मत्वेन प्रतिपद्य धीरा अत्यन्तविवेकिनो युक्तात्मानो नित्यसमाहितस्वभावाः सर्वमेव समस्तं शरीरपातकालेऽप्याविश-

---

क्तिस्तन्निमित्तः प्रमादोऽनवधानतेत्यर्थः । **अलिंगादिति** । ननु इन्द्रजनकगार्गीप्रभृतीनां संन्यासरहितानामात्मप्राप्तिश्रवणादलिंगादिति कथमिति चेन्न संन्यासपदेन सर्वत्यागात्मकस्यान्तरस्य संन्यासस्य स्वत्वाभिमानाभावरूपस्य विवक्षितत्वात्तेषामपीन्द्रजनकगार्गीप्रभृतीनां स्वत्वाभिमानाभाव आसीदेव । यस्य मे नास्ति सर्वत्र यस्य मे नास्ति किंचन । मिथिलायां प्रदीप्तायां न मे दहति किंचन ॥ इति जनकोक्तेः । बाह्यलिंगात्मकः संन्यासस्तु न विवक्षितः । न लिंगं धर्मकारणमिति स्मृतेः ॥ **तपोऽत्रेति** । अत्र तपःपदेन ज्ञानं गृह्यते । एवं च विद्वत्संन्यासं कृत्वा परमात्मज्ञानं संपादयति यस्तेन ब्रह्म लभ्यमित्यर्थः । **धामेति** । स आत्मा तद्ब्रह्मेति श्रुत्यात्मब्रह्मणोरभेदात्स्वरूपभूतं ब्रह्म गच्छतीत्यर्थः ॥ ४ ॥

**दर्शनवन्त इति** । ज्ञानवन्त इत्यर्थः । **शरीरोपचयकारणेनेति** । अन्नादिना बाह्यपदार्थेन शरीरस्योपचयो वृद्धिर्भवत्यतोऽन्नादि तत्कारणम् । **निष्पन्नात्मान इति** । आत्मस्वरूपावस्थिता इत्यर्थः । **एकदेशेनेति** । देहोपाधिसत्त्वेऽपि देहाधिष्ठानद्वारा ब्रह्मप्राप्तिरस्त्येव परं सा एकावयवात्मिका न सर्वावयवात्मिका । **शरीरपातकालेऽपीति** । विदेहमुक्तिरियम् । **भिन्नघटाकाशवदिति** । भिन्ने घटे यथा तत्रत्यमाकाशं महाकाशरूपं भवति तद्वत् देहे नष्टे चैतन्यं महाचैतन्यरूपेणावतिष्ठते । नत्वन्यत्र गमनम् । न तस्य प्राणा

न्ति घटाकाशवदविद्याकृतोपाधिपरिच्छेदं जहति । एवं ब्रह्मविदो ब्रह्म धाम प्रविशन्ति ॥ ५ ॥

किंच ।

> वेदान्तविज्ञानसुनिश्चितार्थाः
> संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
> ते ब्रह्मलोकेषु परान्तकाले
> परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥

वेदान्तजनितं विज्ञानं वेदान्तविज्ञानं तस्यार्थः पर आत्मा विज्ञेयः, सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः ते च संन्यासयोगात्सर्वकर्मपरित्यागलक्षणयोगात्केवलब्रह्मनिष्ठास्वरूपाद्योगाद्यतयो यतनशीलाः शुद्धसत्त्वाः शुद्धं सत्त्वं येषां संन्यासयोगात्ते शुद्धसत्त्वाः । ते ब्रह्मलोकेषु । संसारिणां ये मरणकालास्तेऽपरान्तकालास्तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परान्तकालस्तस्मिन्परान्तकाले साधकानां बहुत्वाद्ब्रह्मैव लोको ब्रह्मलोकः एकोऽप्यनेकवद्दृश्यते प्राप्यते च । अतो बहुवचनं ब्रह्मलोकेष्विति, ब्रह्मणीत्यर्थः । परामृताः परममृतममरणधर्मकं ब्रह्मात्मभूतं येषां ते परामृता जीवन्त एव ब्रह्मभूताः, परामृताः सन्तः परिमुच्यन्ति परि समन्तात्प्रदीपनि

---

उत्क्रामन्ति । इहैव समवनीयन्ते । इति श्रुतेः । **अविद्याकृतेत्यादि** । अविद्यया कृतः संपादितो देहरूप उपाधिस्तद्विभागं त्यजन्ति ब्रह्मविद इत्यर्थः ॥ ५ ॥

**वेदान्तेत्यादि** । विद्यते ज्ञायतेऽनेनेति वेदो ज्ञानं तस्यान्तो निश्चयो यत्रेति वेदान्तपदेनोपनिषदां ग्रहणम् । वेदान्तविज्ञानस्य योऽर्थः परमात्मा विज्ञेय इतिरूपः स सुनिश्चितो येषां ते । **ब्रह्मनिष्ठास्वरूपादिति** । अत्र ' योगश्चित्तवृत्तिनिरोधः ' इति सूत्रितो योगो न ग्राह्यः । किंतु ब्रह्मनिष्ठारूपो ग्राह्यः । सत्त्वं बुद्धिः । **परान्तकाल इति** । अत्रान्वयक्रमेण व्याख्यानम् । पश्चाद्ब्रह्मलोकेष्वित्यस्य व्याख्यानात् । परः–निरतिशयः । यस्मात्परोऽन्तकालो नास्तीत्यर्थः । संसारिणां पुनः पुनर्जायमानानां मरणं न निरतिशयोऽन्तकालः । यतो द्वितीयजन्मनि पुनर्मरणस्य संभवः । अस्य तु ब्रह्मविदोऽयं परान्तकालः । विदेहमुक्तौ पुनर्जन्माभावात् मरणस्यासंभवात् । तदाह–**संसारिणामित्यादि** । ननु एकस्मिन् ब्रह्मणि ब्रह्मलोकेष्विति बहुवचनं कथमित्याह–**एकोऽप्यनेकवदिति** । एकमपि ब्रह्म साधकबाहुल्यादनेकवद् भासते तेन साधकबाहुल्यदृष्ट्या बहुवचनम् । वस्तुतस्तु ब्रह्मैकमेव । **जीवन्त एवेति** । अनेन जीवन्मुक्तिर्बोधिता । **प्रदीपनिर्वाणवदिति** । प्रदीपस्य वर्ति-

र्णवद्भिन्नघटाकाशवच्च निवृत्तिमुपयान्ति परिमुच्यन्ति परिमुच्यन्ते सर्वे, न देशान्तरं गन्तव्यमपेक्षन्ते ।

" शकुनीनामिवाकाशे जले वारिचरस्य च ।
पदं यथा न दृश्येत तथा ज्ञानवतां गति." ॥

" अनध्वगा अध्वसु पारयिष्णवः" इति श्रुतिस्मृतिभ्याम् । देशपरिच्छिन्ना हि गतिः संसारविषयैव, परिच्छिन्नसाधनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम् । यदि हि देशपरिच्छिन्नं ब्रह्म स्यान्मूर्तद्रव्यवदाद्यन्तवदन्याश्रितं सावयवमनित्यं कृतकं च स्यात् । न त्वेवंविधं ब्रह्म भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता । अपि चाविद्यादिसंसारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्यभूतम् ॥ ६ ॥

किंच—

**गताः कलाः पञ्चदश प्रतिष्ठा**
**देवाश्च सर्वे प्रति देवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा**
**परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥**

मोक्षकाले या देहारम्भिकाः कलाः प्राणाद्यास्ताः स्वाः प्रतिष्ठा गताः स्वं स्वं कारणं गता भवन्तीत्यर्थः । प्रतिष्ठा इति द्वितीयाबहुवचनम् ।

---

कृतोपाधिरूपस्य वर्तिध्वंसे यथा तेजःसामान्यतापत्तिस्तद्वदित्यर्थः । **शकुनीनामिवेति** । यथाकाशे शकुनीनां पक्षिणां जले वारिचरस्य मत्स्यादेः पदं पादन्यासप्रतिबिम्बं न दृश्यते तथा ज्ञानवतां विदेहमुक्तौ किमपि चिन्हं न दृश्यत इत्यर्थः । **अनध्वगा इति** । संसाराध्वनां पारयिष्णवः पारयितुं समापयितुमिच्छन्तीति समाप्तिकामा अनध्वगा भवन्तीत्यर्थः। तर्ह्यतोऽपीहैव मोक्षो वक्तव्य इत्याह—**देशपरिच्छिन्नेति** । यद् देशविशिष्टं तदल्पसाधनसाध्यं भवति घटवत् । ब्रह्म तु सर्वरूपत्वाद्देशपरिच्छेदरहितं तेन न देशवैशिष्ट्येन प्राप्यम् । यदि ब्रह्म देशपरिच्छिन्नं स्यात्तर्हि घटादिमूर्तद्रव्यवत् अन्याश्रितम्, आद्यन्तसहितम्, सावयवम्, अनित्यम्, कृतिजन्यं च स्यात् । एवं चैतद्दोषरहितत्वाद् ब्रह्मणस्तत्प्राप्तिरपि देशवैशिष्ट्येन भवितुं नार्हति । किंच बन्धात्मिकाया अविद्याया अपनयो दूरीकरणमेव मोक्षस्य स्वरूपं न तु घटादिवत् कार्यरूपो मोक्षः ॥ ६ ॥

**प्रतिष्ठा इति** । प्रतितिष्ठन्ति कार्याणि आभिरिति प्रतिष्ठाः कार्यस्थितिबीजानि कारणानीत्यर्थः । **कारणं गता इति** । लीयन्त इत्यर्थः । भूतांशानां भौतिकानां च

पञ्चदश पञ्चदशसंख्याका या अन्त्यप्रश्नपरिपठिताः प्रसिद्धाः, देवाश्च देहाश्रयाश्चक्षुरादिकरणस्थाः सर्वे प्रतिदेवतास्वादित्यादिषु गता भवन्तीत्यर्थः। यानि च मुमुक्षुणा कृतानि कर्माण्यप्रवृत्तफलानि, प्रवृत्तफलानामुपभोगेनैव क्षीणत्वात्। विज्ञानमयश्चात्माविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन गत्वा जलादिषु सूर्यादिप्रतिबिम्बवदिह प्रविष्टो देहभेदेषु कर्मणां तत्फलार्थत्वात्सह तेनैव विज्ञानमयेनात्मना। अतो विज्ञानमयो विज्ञानप्रायः। त एते कर्माणि विज्ञानमयश्चात्मोपाध्यपनये सति परेऽव्ययेऽनन्तेऽक्षये ब्रह्मण्याकाशकल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्वेऽनपरेऽनन्तरेऽबाह्येऽद्वये शिवे शान्ते सर्व एकी भवन्त्यविशेषतां गच्छन्त्येकत्वमापद्यन्ते जलाद्याधारापनय इव सूर्यादिप्रतिबिम्बाः सूर्ये, घटाद्यपनय इवाकाशे घटाद्याकाशाः ॥ ७ ॥

---

महाभूतेषु लयो दर्शितः। **अन्त्यप्रश्नेत्यादि**। प्रश्नोपनिषदि षट् प्रश्नाः। तत्रान्तिमे षष्ठे प्रश्ने पठिताः। देहाश्रयाणां चक्षुरादीन्द्रियाणां कारणभूता देवा आदित्यादयस्तत्रेन्द्रियाणां लयस्तदाह—**प्रतिदेवतास्विति**। कर्मफलदानार्थं देवाः सूर्यादयः प्राणादीनधितिष्ठन्ति। प्राणादयश्च मायामयमहाभूतांशावष्टब्धेभ्योः जीवाविद्यारूपभूतसूक्ष्मेभ्यः तत्तज्जीवादृष्टवशात् तत्तत्प्राणादिरूपेणोत्पद्यन्ते। एवं चैतत्सिद्धम्। प्रथमं कर्म ततस्तत्फलदानार्थं देवानामागमनं ततोऽदृष्टवशात्तत्तज्जीवानां प्राणाद्युत्पत्तिः। तथाच विपरीतक्रमेण लये कर्मणो भोगेनावसाने ते देवाः स्वस्थानं गच्छन्ति। ततस्तदधिष्ठितानां प्राणादीनामपि स्वस्वकारणे लयः। एतत्सर्वं जीवाविद्याकार्यं ब्रह्मरूपम्। अर्थात् ब्रह्मैव पूर्वोक्तेनाविद्याकार्येण प्रतिभासते तदाह—**यानि चेत्यादिना**। **अप्रवृत्तफलानीति**। संचितक्रियमाणात्मकानि। न तु प्रारब्धरूपाणि तेषां भोगादेव क्षयः। तदाह—**प्रवृत्तफलानामिति**। प्रवृत्तफलानि—प्रारब्धकर्माणि। विज्ञानमयः—जीवः। **आत्मत्वेनेति**। अविद्याकृतो बुध्यादिरूप उपाधिर्ममैव स्वरूपमिति मत्वेत्यर्थः। **जलादिष्विति**। जल आकाशस्थसूर्यस्य प्रतिबिम्बं यथा प्रविशतीत्युच्यते तद्वदित्यर्थः। देहभेदेषु—देवदत्तादिदेहेषु। **तत्फलार्थत्वादिति**। कर्मणां फलमेव देहोत्पत्तिरिति भावः। **विज्ञानप्राय इति**। विज्ञानमय इत्यत्र प्राचुर्यबोधको मयट्। **त एत इति**। कलाः प्राणा देवाश्च। विज्ञानमयः—जीवः। उपाध्यपनय—देहरूपोपाधिदूरीकरणे। आकाशकल्पे—आकाशसदृशे। अपूर्वे—कारणरहिते। अनपरे—कार्यरहिते पूर्वं—कारणम्। अपरं—कार्यम्। **जलाद्याधारापनय इति**। जलाद्याधारो घटादिस्तदपनये सूर्यप्रतिबिम्बं यथा सूर्ये लीयते यथा वा घटाकाशो घटरूपोपाधौ दूरीकृते महाकाशे लीयते तद्वत्स्वयं चैतन्यरूपो जीवोऽविद्याजन्यबुद्धिप्रतिबिम्बितोऽविद्यानाशाद्बुद्ध्युपाधावपनीते शिवे चैतन्यमये लीयते ॥ ७ ॥

किंच ।

**यथा नद्यः स्यन्दमानाः समुद्रेऽ-**
**स्तं गच्छन्ति नामरूपे विहाय ।**
**तथा विद्वान्नामरूपाद्विमुक्तः**
**परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥**

यथा नद्यो गङ्गाद्याः स्यन्दमाना गच्छन्त्यः समुद्रे समुद्रं प्राप्यास्तमदर्शनमविशेषात्मभावं गच्छन्ति प्राप्नुवन्ति नाम च रूपं च नामरूपे विहाय हित्वा, तथा अविद्याकृतनामरूपाद्विमुक्तः सन्विद्वान्परादक्षरात्पूर्वोक्तात्परं दिव्यं पुरुषं यथोक्तलक्षणमुपैत्युपगच्छति ॥ ८ ॥

ननु श्रेयस्यनेके विघ्नाः प्रसिद्धा अतः क्लेशानामन्यतमेनान्येन वा देवादिना च विघ्नितो ब्रह्मविदप्यन्यां गतिं मृतो गच्छति न ब्रह्मैव । न । विद्ययैव सर्वप्रतिबन्धस्यापनीतत्वात् । अविद्याप्रतिबन्धमात्रो हि मोक्षो नान्यप्रतिबन्धः । नित्यत्वादात्मभूतत्वाच्च । तस्मात्—

**स यो ह वै तत्परमं ब्रह्म वेद**
**ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति ।**
**तरति शोकं तरति पाप्मानं**
**गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥**

स यः कश्चिद्ध वै लोके तत्परमं ब्रह्म वेद साक्षादहमेवास्मीति जानाति । स नान्यां गतिं गच्छति । देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो

---

**यथा नद्य इति** । प्रश्नोपनिषदि 'स यथेमा नद्यः स्यन्दमानाः' प्र. ६-५ इति मंत्रोऽनेन समानार्थकः । **अविशेषात्मभावमिति** । समुद्रे कियद्दूरं गता गंगा मधुरजलापि समुद्रवत्क्षारमयजला भवतीत्यर्थः । **नामरूपे इति** । समुद्रं गतानां नदीनां गंगेत्यादि नाम माधुर्यरूपं च नश्यति । **अविद्याकृतेति** । नाम रूपं चाविद्ययैव संपादितं न वास्तवमतो विनश्यति । अस्ति भाति प्रियमिति त्रिकं तु ब्रह्मरूपत्वेन वास्तवत्वान्न नश्यति । नासतो विद्यते भावो नाभावो विद्यते सतः । इति भगवदुक्तेः ॥ ८ ॥

श्रेयांसि बहुविघ्नानीति न्यायाद्विद्याप्राप्त्यनन्तरमपि मोक्षे विघ्नाः संभवेयुरिति शंकामपाकर्तुं पूर्वपक्षोत्तरपक्षावाह–**नन्वित्यादिना** । **अविद्याप्रतिबन्धमात्र इति** । केवलमविद्यैव प्रतिबन्धो मोक्षे । न तदितरः । **अन्यप्रतिबन्ध इति** । बहुव्रीहिः । अन्यः

न शक्यते कर्तुम् । आत्मा ह्येषां स भवति । तस्माद्ब्रह्म विद्वान्ब्रह्मैव भवति । किंच नास्य विदुषोऽब्रह्मवित्कुले भवति । किंच तरति शोकमनेकेष्टवैकल्यनिमित्तं मानसं संतापं जीवन्नेवातिक्रान्तो भवति । तरति पाप्मानं धर्माधर्माख्यं गुहाग्रन्थिभ्यो हृदयाविद्याग्रन्थिभ्यो विमुक्तः सन्नमृतो भवतीत्युक्तमेव भिद्यते हृदयग्रन्थिरित्यादि ॥ ९ ॥

अथेदानीं ब्रह्मविद्यासंप्रदानविध्युपप्रदर्शनेनोपसंहारः क्रियते ।

**तदेतदृचाभ्युक्तम्–**

**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः**
**स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।**
**तेषामेवैतां ब्रह्मविद्यां वदेत**
**शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥**

तदेतद्विद्यासंप्रदानविधानमृचा मन्त्रेणाभ्युक्तमभिप्रकाशितम् । क्रियावन्तो यथोक्तकर्मानुष्ठानयुक्ताः । श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन्ब्रह्मण्यभियुक्ताः परं ब्रह्म बुभुत्सवः स्वयमेकर्षिमेकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्तः श्रद्दधानाः सन्तो ये, तेषामेव संस्कृतात्मनां पात्रभूतानामेतां

पिशाचादिः प्रतिबन्धो यस्येति । तादृशो मोक्षो न भवतीत्यर्थः । **आत्मा ह्येषामिति** । अयं देवानामात्मभूतो भवति तेन स्वात्मनि विघ्नकरणासंभवाद् देवास्तत्र विघ्नं कर्तुं न पारयन्ति । जीवन्नेवेति पदं भाष्ये प्रयुज्य भाष्यकृत् श्रुतितात्पर्यभूता जीवन्मुक्तिरिति बोधयति । गुहापदेन बुद्धिगुहा ग्राह्या तदाह–**हृदयाविद्याग्रन्थिभ्य इति** ॥ ९ ॥

मुण्डकोपनिषद् द्वारा यदा ब्रह्मविद्या प्रतिपाद्यते तदाथर्वणिकैरनेनैव विधिना प्रतिपाद्या ग्राह्या चेति प्रकृतपरामर्शकादेतच्छब्दाद् द्योत्यते । यैः शिरोव्रतमनुष्ठितं तेभ्य एवमां ब्रह्मविद्यां कथयेदित्याह—**एतां ब्रह्मविद्यामिति** । अपरस्मिन् ब्रह्मणि–सगुणोपासनायाम् । बुभुत्सवः–जिज्ञासमानाः । **एकर्षिमिति** । एकर्षिरित्यग्नेर्नाम । संस्कृतात्मनां—शुद्धचेतसाम् । **पात्रभूतानामिति** । अपात्रशिष्याय विद्यादानस्य श्रुतिस्मृतिप्रतिषिद्धत्वात् । आथर्वणेऽपि । विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि । असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् । यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् । यस्तेन द्रुह्येत्कतमच्च नाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥ इति । एतदेव श्रुतिवाक्यं मनुना वाक्यान्तरप्रबन्धेन कथितम् । तथा च मनुस्मृतौ द्वितीयेऽध्याये । विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना । आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ ११३ ॥ विद्या ब्राह्मणमेत्याह शेवधिष्टेऽस्मि रक्ष माम् । असूयकाय मां मादास्तथा स्यां वीर्य-

ब्रह्मविद्यां वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणम् । यथाथर्वणानां वेद-व्रतं प्रसिद्धम् । यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधानं तेषामेव वदेत॥१०॥

तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते ।
नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥

इत्यथर्ववेदीयतृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥
ॐ भद्रं कर्णेभिरिति शान्तिः ।
इत्यथर्ववेदीया मुण्डकोपनिषत्समाप्ता ॥

तदेतदक्षरं पुरुषं सत्यमृषिरङ्गिरा नाम पुरा पूर्वं शौनकाय विधिवदुपसन्नाय पृष्टवत उवाच । तद्वदन्योऽपि तथैव श्रेयोर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः । नैतद्ग्रन्थरूपमचीर्णव्रतोऽचरितव्रतोऽप्यधीते न पठति । चीर्णव्रतस्य हि विद्या फलाय संस्कृता भवतीति । समाप्ता ब्रह्मविद्या । सा येभ्यो ब्रह्मादिभ्यः पारम्पर्यक्रमेण संप्राप्ता तेभ्यो नमः परमऋषिभ्यः । परमं ब्रह्म साक्षाद्दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयस्तेभ्यो भूयोऽपि नमः । द्विर्वचनमत्यादरार्थं मुण्डकसमाप्त्यर्थं च ॥११॥

इति तृतीयमुण्डकोपनिषद्भाष्ये द्वितीयः खण्डः ॥ २ ॥

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवतः कृतावाथर्वणमुण्डकोपनिषद्भाष्यं समाप्तम् ॥

---

वत्तमा॥११४॥ यमेव तु शुचिं विद्या नियतं ब्रह्मचारिणम् । तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ ११५ ॥ १० ॥

**चीर्णव्रतस्येति** । येन शिरोव्रतमाचरितं तस्मा उक्ता ब्रह्मविद्या मोक्षरूपफलसाधिका भवति । ब्रह्मविद्या–उपनिषत्प्रतिपाद्यं ब्रह्मज्ञानम् । **ब्रह्मादिभ्य इति** । ब्रह्मा ज्येष्ठपुत्रायाथर्वणे प्राह । अथर्वांगिनात्रि महर्षये । अंगिर्भरद्वाजगोत्राय सत्यवहाय । सत्यवहोऽङ्गिरसे । अंगिराः शौनकायेति । पारम्पर्यक्रमेण–गुरुपरम्परया । **मुण्डकसमाप्त्यर्थमिति** । शिरसि वन्हिधारणव्रतं येन कृतं तेन लभ्यमानत्वादस्य मुण्डकेति नाम यथार्थमिति प्रतीयते ॥ ११ ॥

**इति मुण्डकोपानिषद्भाष्ये बालबोधिन्यां तृतीयमुण्डके द्वितीयः खण्डः॥३।२**

**इति श्रीमुण्डकोपानिषद्भाष्ये विद्वद्वशंवदपाठकोपाह्वश्रीधरशर्मकृता बालबोधिनी समाप्ता ।**